veram, in the shape of journals in sanskrit, Hindi and other Vernaculars serving as a true education in matters of practical religion and social philosophy and in the shape of innumerable temples all over the land engendering real love in the Votaries' breasts for service of God and Humanity. The purest chip of ' The Old Block, ' His Holiness is no less a champion of our modern progressive methods in our New India and the scientific West. A Constant reader of news-papers and world magazines, a pakka linguist with an authoritative study in several languages His Holiness The Jagadguru is most Conversant with the present day events in every part of the world and it is certainly an intellectual and practical treat to hear him on the most vexed and leading problems in our national reconstruction and added to these, the ancient seer in him visualises the future of the world with his yogic vision and the transcendantal perception of the inner workings of the Cosmic World.

Such a master-mind silent as the deep Ganges, steady like the rising Himalayas and sure like his Bombay Temple, a gem of South Indian Architecture has brought out in racy, elegant and Charming sanskrit a Book on his pilgrimage to Badarikasrama, the summum Bonum of every true and orthodox Hindu. The book is a collection of his contributions to his Manjubhashini, the only international sanskrit weekly in the world and a record of a true and instructive history of the pilgrimage in the most interesting manner possible. Interesting and instructive it certainly is and when the book is translated into English and other Vernaculars as undoubtedly it shall be, the several railway authorities, the officers of the respective P. W. D. in the areas under tour, the people living in the several territories under tour and chiefly the pilgrims themselves will find vast material for their benefit. In his own sanskrit preface the Illustrious Author says that his attempts to fill a void as no correct account of a tour on scien-

tific lines has been so far forthcoming and that his attempt lay in the inspiration he got by reading tour accounts of European savants His comparisons of places and people and their habits and his striking contrasts of good and bad in the life of the country coming under his observation mark him out as a very superior critic in the present day India on things Indian A cursory study of the book will acquaint us with everything that an intelligent tourist requires for his information in a very deailed degree and to a minute observation The book is at once a railway guide with maps, plans and an account of topography, a social and economical review touching on ancient and modern Crafts and a collection of historical architectural, scenerical topics of a high order An admirer of nature and nature s beauty he has clothed everthing he writes upon in natural colours and makes us see with him the Divine in nature and probe with him into the Divine mystery there in

Though the treatment of the tour is about twenty -seven years old and the author then was less by twenty seven years of age—for he is now fifty eight we can see sitting anywhere a grand panorama of what all he saw and what all he did in that long and arduous tour by his masterly treatment of the subject His admiration for the progressive Bombay and his contrast with the lethargy-struck Conjeeveram, the ancient kanchi under decadence, is something like a thesis on the necessity of social and economical adjustment His frequent references to Puranas and Ithihasas while alluding to holy centres of pilgrimage show in striking contrast their once glorious existence with the neglect and torpor now covering them A small rivulet a little waterfall and a single hamlet do not miss his searching eyes and his touching refernces to most engaging scenerіes do him great honour as a connoisseur of nature's beauties He is exact to a mile in marking distances and is true in his discriptions of hamlets, bri-

dges and the Himalayan peaks all round. The location of a place, a temple, the plans and designs that appear in the book do him no small honour in that he handles his theme with an expert hand. The author rises to his best while he treats of Badarikasrama and we see atonce that he is handling his subject with the experience of The Alps climber. He brings out, in vivid colours the landscape, the Nature's Beauties the Temple and the Divine Images within, the holy service etc that a mere reading of the Book annihilates the long and terrible distance. It reflects indeed very creditably on the discerning eye of the author that he anticipates Government interference in the financial affairs of the Temple so long ago as 1904. His treatment of the holy waters is marked with such sacredness that even a rank materialist will have to pause before venturing to offer his view points A theist will find practical methods for concentration contemplation and meditation from the summary he gives of

Badarikasrama Mahatmya in Sanatkumara samhita which is itself a hearty treat to the aspiring soul. The book and its contents are enlivened with photos of things that the author admired most and when I say that His Holiness is equally a good photographer it now remains for the critical public to see if The Jagadguru Maharaj is an Omniologist ever trying to serve the intelligent public with the rare gifts of God he enjoys in abundance. May God, the all merciful, spare Our Jagadguru for many many long years of useful service and practical leadership.

M. Chakravarthi.

Mallur--Mysore.



श्रीकाञ्ची-प्रतिवादि भयङ्कर-मठाधीश्वरः जगद्गुरुः
श्रीमद्-अनन्ताचार्यः ।

श्रीः ।

# भूमिका ।

मनुष्याणां ज्ञानाभिवृद्धिसामग्रीमध्ये देशाटन-मप्यन्तर्भवति । न केवलमन्तर्भवत्येव, अपि तु प्रधानं कारणमित्यपि वक्तुं शक्यते । यथाहुः-- " देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः । " इत्यादि । नानादेशाटनेन बुद्धिवैशद्येन साकं चातुर्य मप्यभिवर्धते । प्रतिदिनमेव भिन्नभिन्नेषु देशेषु नाना विधानां नवनवानां पदार्थानां दर्शनम्, नानावेषभाषा भूषाचारादिपरिज्ञानं च यात्रिणां भवति । " कूपे कूर्मस्सधर्मा किं जानीते भुवनचरितं किं सुखं चोप भुङ्क्ते " इत्येकत्रैव सदा वसतां निन्दापरं पद्यं प्रसिद्धम् ।

अनादेः कालाद्भारते तीर्थयात्राचारः प्रचलतीति सत्यम्, परन्तु यात्रया सम्पादितं ज्ञानं यथान्येषामप्यु पकाराय भवेत्तथा न कोपि प्रयत्नो भारतवासिभिर-स्मत्पूर्वजैः कृतो ज्ञायते । पाश्चात्यदेशवासी कोपि यात्रां कुर्वन् स्वानुभवावगतानर्थान्ग्रन्थप्रणयनेन परेषां पुरतस्स्थापयति । पाश्चात्यदेशेषु यात्रावृत्तान्तप्रति पादकानां ग्रन्थानाम्महद्गौरवमस्ति । महताऽऽदरेण

पठन्ति तद्देशवासिनः कुतूहलेन च यात्रावृत्तान्तप्रति पादकान् ग्रन्थान्। यूरोपामेरिकादिदेशेभ्यः प्रतिवर्षं सहस्राधिका यात्रिणो भारतमागच्छन्ति देशाटनकुतूहलेनेति सर्वे जानन्ति। प्रतिवर्षमेव च तद्देशवासिभिरेतादृशैर्यात्रिभिर्लिखिताः परश्शतं यात्रावृत्तान्त ग्रन्थास्तेषु देशेषु प्रकाशिता भवन्ति।

यद्यपि भारतेपि देशभाषामयाः केचन यात्रावृत्तान्त गर्भा ग्रन्था अद्यावतरन्तो दृश्यन्ते। संस्कृतभाषामयस्तु न कोपि तादृशो ग्रन्थोद्य यावद्बहिरवतीर्णो दृष्टः। सन्ति नाम काव्यरूपा यात्राप्रबन्धाः प्राचीनाः। ते च प्रायश उत्प्रेक्षातिशयोक्त्यादिगर्भा न तत्तद्देश मार्गादिवस्तुस्वरूपावबोधजनकाः, अपि तु कवि चातुरीदर्शनमूलकतात्कालिकानन्दमात्रजनकाः। तादृशानां ग्रन्थानां दर्शनेन यात्रां कर्तुमिच्छतां न कोप्युपकारो नाम भवितुमर्हति। तत्तद्देशभाषासाहित्यभाण्डाराभिवृद्धये प्रयतमानेषु तत्तद्देशभाषाभिज्ञेषु विद्वत्सु संस्कृतभाषाकुशलाः परं सर्वभाषामातृभूतसंस्कृतभाषा साहित्याभिवृद्धिविषये मात्रयापि प्रयत्नपरा न दृश्यन्त इति महतः खेदस्य स्थानमिदम्।

१९०४ तमे ख्रिस्ताब्दे बदरिकाश्रमसेवनाय श्राश्वीत: प्रस्थाय धूमशकटमार्गेण पादचारेण च यात्रां कृतवद्भिरस्माभिस्तद्गत्ते यात्रावृत्तान्ताः मञ्जुभाषिण्यां क्रमशः प्रकाशिता अभूवन्। ते च पुस्तकाकारेण प्रकाशिता मासयापि वा संस्कृतसाहित्यरसिकानां यात्राप्रियाणां कौतुकाय मनोविनोदाय च भविष्यन्तीति मन्यमानैस्तत्संग्रहरूपोयं ग्रन्थः प्रकाश्यते। तस्मात्तस्मात्स्थानात्प्रेषितानि पत्राणि यथायथा पूर्वं प्रकाशितान्यभूवंस्तानि तथैवात्र संगृह्य प्रकाश्यन्त इति बोध्यम्।

इति— संस्कृतसाहित्ती सेवकः—

प्रतिवादिभयङ्करः—अनन्ताचार्यः।



श्रीः ।

# श्रीबदरिकाश्रम

## यात्रावृत्तान्तः ।

—०—

### ३०–१०–०४. रायचूर ।

पूर्वेद्युः ( २९–१०–०४ ) सायं षड्घण्टावादन समये बन्धुवृद्धैस्समानवयोभिरधिकवयोभिर्न्यून वयोभिश्च स्निग्धैरधिकारितैर्भृत्यैश्च विरहासहैरपि सन्निहिते प्रस्थानसमयेऽगत्या साशीर्वादं सकण्ठग्रहं सप्रणामं सकुशलाशंसनं च दत्ताभ्यनुज्ञः काञ्च्याः प्रातिष्ठे बाष्पशकटमार्गेण । भारते वर्तमानासु सर्वास्वपि बाष्पशकट पथजनतासु दक्षिणभारतबाष्पशकट पथजनता ( South Indian Railway Company ।) व्ययापेक्षयात्यधिकायवत्यपि यात्रिणां सुखा धाने न मात्रयापि दृष्टिं निदधातीति प्रसिद्धतरोयमर्थः । इत्थं च तदीयबाष्पशकटैर्यादृशैर्भाव्यं तादृशानेव ताम् प्रत्यक्षतोप्यन्वभवम् ।

अहं तावद् द्वितीयश्रेणीप्रविष्टशकटारूढो भवम् तत्रारोपितो दीपश्च शकटानुबन्धप्रस्थानकालात्कति पयक्षणाभ्यन्तर एव जनताया व्ययमिव परिहर

निर्वाणोभवत् । ततश्चार्कोणम् (Arkonam) बाष्पशकटावस्थितिस्थानं प्राप्ते शकटानुबन्धे शकटानिहितानां पदार्थानां ग्रहणे महान् श्रमोऽजायत । अन्ततश्च कुतश्चित् दीपमानीय पदार्थग्रहणं कर्तव्यमासीत् ।

द्वितीयश्रेणीशकटस्यैवैतादृश्यामवस्थायां तृतीयश्रेणीशकटस्य दशा किमु वक्तव्या । सुहृद्भिरेव तत्रत्यानां यात्रिणां कष्टमनुमीयताम् ।

कांच्या नवक्रोशदूरस्थस्य 'आर्कोणम्' बाष्पशकटावस्थितिस्थानस्य प्राप्तयेव प्राय एकघण्टाकालोऽपेक्ष्यते। अनेनैव शकटानुबन्धस्य गतिवेगस्सुहृदां हृदयमवतरेदिति नास्माभिः प्रपञ्च्यते ।

शकटात्तस्मादवरुह्य वयं मद्रपुरबाष्पशकटपथजनसीयं (Madras Railway Company) मद्रपुरादागतं बाष्पशकटानुबन्धमारुहाम । स च शकटानुबन्धो ८–४० घण्टावादनसमये रात्रौ ततः प्रातिष्ठत । अस्य च शकटानुबन्धस्य पत्रवाहित्वेन प्रतिघण्टं सार्धसप्तदशक्रोशदूरयायिनी गतिरिति कथ्यते । प्रस्थिते च शकटानुबन्ध उभयतः पार्श्वयोरन्धकारेण किमप्यालोकयितुमपारयन् शयनायैवोद्युक्तो

भवम् । कथं कथंचिम रेणिगुण्टा (Renigunta) याण्वशकटावस्थितिस्थानप्राप्तिपर्यन्तं श्रीपद्पुराद्ा गमिष्यद्भिर्मित्रैस्संलापाय जागरणेनैवायापयं कालम् ।

तत्स्थानं प्राप्ते च शकटानुबंधे पूर्वमेव तत्रागतै र्मित्रैस्संगतैः क्षणं सल्लप्य तेभ्योपि गृहीताभ्यनुज्ञोभवम् । प्रातिष्ठत च ततोपि शकटानुबन्धो दशैव निमेषां स्तत्र विलंब्य ।

कांचीतः प्रस्थानसमये केवलमुत्तरीयेणैकेनैव प्रावृतशरीरोभवम् । नासीत्तत्र मात्रयापि शीतम् । क्रमेण फट्पानगरोपकण्ठमुपगच्छति शकटानुबन्धे शीतमधिकमन्वभूवम । पेटिकातः कंबळप्रावरणमगत्या निष्का सनीयमेवाभूत् । क्रमशः कमशश्शाभिवर्धमानमेवासी च्छीतमुत्तरत उत्तरतो गच्छति शकटानुबन्धे ।

प्रत्यूष एव गुन्तिनगरं प्रापच्छकटानुबंधः । प्रावर्तन्त चांग्ला अन्येपि तदनुसारिणः काफीरसपानाय । मादृशास्तु द्विजालदर्शनेन नानाविधरसास्वादमनुभिपितोत्कण्ठा अपि मनोविलीनमनोरथा विचित्रामेव चित्त वृत्तिमन्वभवन् ।

ततस्तो विरळीभूतत्वादुभयतश्शकटानुबन्धस्य सुदूरं हरितसस्यभरितानि क्षेत्राणि नेत्रयोस्सुखंन्यतरन्,

एतन्नगरविषये वक्तव्या अंशास्सर्वेपि पूर्वमेवास्माभिः ( ३०–८–०० ) मञ्जुभाषिण्यामेकदा प्रकाशिता इति नाद्य पुनश्चालयामस्तत्र लेखिनीम् । इदं पुनर्वक्तव्यम्—नगरस्यास्य सर्वतो द्वित्रक्रोश दूरवर्तिषु ग्रामेष्वल्पाल्पशो वर्तते महामारीरोग इत्यनागतविधायिना माण्डलिकेनाद्यैव नगरेत्र नगरवासिनां काचन सभा क्रियते । यदि कदाचिद्दैवगत्या दौर्भाग्येनात्रत्यानां पदं निदध्यादत्रापि रोगस्तदा नगरवासिभिस्सर्वैरपि ग्रामाद्बहिः कुटीरेषु वासः कर्तव्य इति वदति माण्डलिकः, जनाश्चांगीकुर्वन्त्य मुमर्थम् । इति ।

बोम्बाय्– १–११–०४ ।

रायचूर नगरात् ३१-१०-०४ दिने प्रातर्दश घण्टावादनसमये महा-भारत-द्वीप बाष्पशकटपथजनतायाः ( Great Indian Peninsula Rail way Company ) पत्रवाहिबाष्पशकटानुबन्धमारुह्य बोम्बाय् नगरं प्रति यातिष्ठे । इतः प्रभृत्येवोक्तमहाभारतद्वीपबाष्पशकटमार्गः प्रवर्तते । अत्रैव च स्थाने मद्रपुरबाष्पशकटमार्गः ( Madras Railway ) समाप्नोति ।

मद्रपुरबाष्पशकटपथजनतीयबाष्पशकटापेक्षया महाभारतद्वीपबाष्पशकटपथजनवीयानि शकटानि किंचिदधिकानाहपरिणाहशालीनि । शकटानुबन्धो प्ययः किंचिद्वेगेनैव याति । प्रतिघण्टं विंशतिक्रोशा न्याति शकटानुबन्धोयम् ।

सार्धदशघण्टावादनसमये कृष्णानामकं बाष्प शकटावस्थितिस्थानं प्रापच्छकटानुबन्धः । बाष्पशकटा वस्थितिस्थानस्य नेदीयस्येव दक्षिणतः प्रवहति कृष्णा नदी । बहवोत्र यात्रिणः कृष्णास्नानार्थमवतरन्ति। कृष्णाया उत्तरतः कश्चिदनुमदाळदोस्ति। यत्राव द्धर्मशालानाम्नापि व्यवह्रियते । पंचषा अन्तर्गृहा स्सन्त्यत्र । गुल्केमसान्यत्किमपि स्थानं यात्रिणा मवस्थितये । इदमेव किंचित्खेदावहम् ।

ततः प्रस्थितश्च शकटानुबन्धः १२–१९ घण्टा वादनसमये वाडी ( Wadi ) नामकं बाष्पशकटा वस्थितिस्थानं प्रापत् । अत्रैव भाग्यनगराधिपराज्य बाष्पशकटमार्गस्य ( Nizam state Railway ) महाभारतद्वीपबाष्पशकटमार्गस्य च सम्मेळनं भवति। यात्रिणां महान् सम्मर्दोऽत्र ।

प्रायो विंशतिनिमेषांस्तत्र स्थित्वा ततः प्रस्थित श्च शकटानुबन्धः १-५० घण्टावादनसमये होटगि ( Hodgi ) नामकं बाष्पशकटावस्थितिस्थानं प्रापत्। दक्षिणमहाराष्ट्रबाष्पशकटमार्गस्य महाभारतद्वीपबाष्प शकटमार्गस्य च सम्मेळनस्थानमिदम् । बेंगळूर नगराद्दक्षिणमहाराष्ट्रबाष्पशकटमार्गो द्वेधा तावत्प्र- वर्तते । तत्रैकः पश्चिमाभिमुखः प्रवृत्तो–हुब्ळि–लोण्डा बेळगाम्–प्रभृतिनगराण्यतिक्रम्य पूनानगरे परिसमा- प्नोति । अन्यश्चोत्तराभिमुखं प्रवृत्तो गुण्टकल् स्थानं प्रथमतः प्राप्य, ततः पश्चिमतः कियद्दूरं गत्वा गदग् ( Gadag ) नगरं प्राप्य, ततः पुनरप्युत्तरेण किय द्दूरं गत्वा होटगि ( Hodgi ) स्थाने परिसमाप्नोति । इत्थमयं दक्षिणमहाराष्ट्रबाष्पशकटमार्गः ( Southeren Maharatta Railway ) सुद् रवर्तिनमपि बेंगळूरनगरमनतिविळम्बेन जनानत्रत्या न्प्रापयन्महदुपकरोति ।

होटगि स्थानात्प्रस्थितश्च बाष्पशकटानुबन्धो-बारसी रोड् ( Barsi Road ) नामकस्थानं सायं-५-५० घण्टावादनसमये प्रापत् । इतः कश्चन शाखारूपो मार्गो बारसी ( Barsi ) नगरं याति । पश्चिमतोऽस्य



मोहमय्यां फ़्लोरा फोण्टन्-नामकं जलयन्त्रम् ।

स्थानस्य विंशतिक्रोशदूरे पाण्डुरगक्षेत्रमास्ते । तत्क्षेत्रं जिगमिषवोऽत्र वाष्पशकटादवतीर्य वृषभशकटद्वारा गच्छन्ति । *

वाराशीरोड्स्थानात्प्रस्थितस्तच्छकटानुबन्धो रात्रौ ७.५५ घण्टावादनसमये दौंड् ( Dhond ) नामकं वाष्पशकटावस्थितिस्थान मापत् । इतः कश्चन ऋजु र्वाष्पशकटमार्गो मण्माड् ( Manmad ) स्थान याति ।

अनेन मार्गेण मद्देवानुकूल्य यात्रिणा सम्पद्यते । एतन्मार्गनिर्माणात्पूर्वं दिरोयिष्टो नासिकास्पर्शवत् मण्माड्स्थान जिगमिषुभि सुदूर पश्चिमतो बोम्बाय नगरं गत्वा तत पुनरपि सुदूर पूर्वतो गमन कर्तव्य मासीत् । अथ प्रदर्शितेन परिलेखेनाऽयमर्थ स्पष्टो भवेत् ।

---

उ




ततोऽपि निर्गतश्च शकटानुबन्धः पूनानगरमप्यतिक्रम्यार्धरात्रात्परं ०–४८ घण्टावादनसमये लोनौलि ( Lonauli ) स्थानं प्रापत् । इतः प्रवर्तते विन्ध्याद्रिः। अतश्च समतले शकटाकर्षको बाष्पयन्त्रशकटः( Engine ) अस्मिन् स्थाने उन्मोच्यते । संयोज्यते

स्यान्यस्तत्स्थाने भारवाही दृढोतिबलवान् शकटानु बन्धेन। शकटानुबन्धस्याग्रतः पृष्ठतश्चेति वाष्पयन्त्रद्वयं संयुक्तं भवति प्रत्येकम्।

इत्थमेकेनाऽऽकृष्टोऽन्येन प्रणुन्नश्च याऽऽश्शकटानुबन्ध स्स्थानात्तस्मात्क्रमेण विन्ध्याद्रि शिखरारोहणे प्रवर्तते। मध्येमार्गंच ब्रह्वयो गुहा अर्धक्रोशदीर्घाः क्रोशायता श्च दृश्यन्ते। षड्विंशति संख्याश्च ता गुहाः। इत्थं क्रमेण सुदूरमतिक्रम्य कुत्रचिदुन्नतमे शिखरेऽवतिष्ठते।

तत्र किञ्चिचित्रं दर्शकानां नयनयोः पुरतस्सन्नि धत्ते। किं तत्? इदंतत्—यथा-कांच्यां वयं यत्र एव वाष्पयन्त्रं शकटानुबन्धेन संयुक्तमाकर्षति तदभि मुखमुपविष्टास्मः। अद्यावधि तथैव गच्छति शकटा नुबन्धोस्मद् दृष्टयोरग्रतएव। एतत्स्थानान्निर्गतस्तु पृष्ठ तो गन्तुमारभते। पृष्ठतस्संयुक्तं वाष्पयन्त्रमाकर्षति शकटानुबन्धम्। भवति च भ्रान्तिरस्माकं पुनर्वयं कांचीं प्रतिनिवृत्तास्मः किं? इति। एतत्तत्वमधः प्रदर्शितेन परिलेखनेन व्यक्तं भवेत्।




मद्रपुरान्निर्गतो बाष्पशकटानुबन्धः पश्चिमोत्तरतो 'क' चिह्निते विन्ध्यशिखरेऽत्युन्नतमेऽवतिष्ठते, 'ख' चिह्नितस्थाने किंचिद्बाष्पयन्त्रं शकटानुबन्धेन पृष्ठतः संयुक्तंभवति। तत्र विन्ध्याद्रेरथाकारत्वाच्छकटानुबन्धपरिभ्रमणपर्याप्तस्थानाभावादियं रीतिस्समादृता। पृष्ठतस्संयुक्तं च बाष्पयन्त्रं शकटानुबन्धमाकर्षति'

नयति च ग चिह्नितस्थानवर्ति बोम्बाय् नगरम् ।
पश्यत सामर्थ्यं मार्ग निर्मापकस्य ।

इत्थंप्रभूतसंयुक्तेन बाष्पयन्त्रेणाऽऽकृष्टो बाष्प शकटानुबन्धः क्रमेणोन्नतरात्पार्वतप्रदेशादवतीर्य सुदूर मतिवाह्य मार्ग ३—५९ घण्टावादनकाले कल्याण नामकं ( Kalyan ) बाष्पशकटावस्थितिस्थानं प्रापत् । इदं च बोम्बाय् नगरा ज्जब्बल्पुरं नागपुरं प्रति च भूसावाल्नगराद् द्वेधा विभज्य गच्छतो मार्गस्य रायचूरनगरात् बोम्बाय् नगरं प्रति गच्छतो मार्गस्य चैकीभावस्थानम् । बोम्बायनगरादेतत्स्थानं यावत्प्रति दिनं प्रायः पंचपंचाशद्बाष्पशकटानुबन्धा आयान्ति इतो बोम्बायनगरं यावत्तावन्त एव गच्छन्ति च । भानुवारे त्वेनान्विनाऽन्येपि केचिदनुबन्धा बाष्पशकटा नां गतागतं कुर्वन्ति । एतावतैव बोम्बायनगरं प्रति गच्छतां ततः प्रतिनिवर्तमानानां च जनानामियत्ता व्यापारगौरवं चानुमातुं शक्यते । कल्याणाद्बाष्पशकट मार्गेण गच्छतां मध्येपथमेव पश्चपाणां बोम्बायनगरा त्कल्याणं प्रति गच्छतां बाष्पशकटानुबन्धानां दर्शनं भवति । बोम्बायनगरात्पूनानगरं यावद् द्वे पङ्क्ती बाष्पशकटचक्राधारलोहदण्डद्विकस्यास्तुते स्तः । अत

श्च वाष्पशकटानुबन्धानां गतागते न कापि बाधा सम्भवति । बोम्बायनगरात् षष्टिक्रोशदूरे पुनानगर मास्ते ।

कल्याणस्थानात् ३—५५ घण्टावादनकाले निर्गतो वाष्पशकटानुबन्धो महता वेगेन बह्वीर्गुहा अतिक्रामन्याति । थाना (Thana) स्थानमतिक्रामत्येव वाष्प शकटानुबन्धे मूर्तिमानिवोत्साहः पुरतो दर्शनपथ मुपयातिनगरं । नेदं तन्द्रालुजनबहुळं कांच्यादिक मिवेति स्फुटी भवति स्वयमेव पथिकानां । लोकान्तर मिवोपयातमात्मानमनुभावयति । केचिच्छाकपिटक हस्ताः, अन्ये दुग्धदधिकुम्भ पूर्णशिरसः, इतरे पुष्प तुळसिकाकण्डोलधारिणः, अपरेच दन्तकाष्ठग्रन्थि कदळीपत्रग्रन्थ्यादिवाहिनोऽन्यादृशाश्चान्ये वाणिज्याय बोम्बायनगरं गच्छन्तोऽहमहमिकया वाष्पशकट मारु हन्तो वाणिजामिव लोकमपरं क्षणान्नयनपथातिथी भविष्यन्तं प्रकाशयन्ति । किंच लिख्यतां, कियद्वा वर्ण्यतां । यदि कांचीवासिनश्श्रीवैष्णवारताळमात्रमारूढेपि नभो भगवति भास्करे तल्प मपरित्यजन्तो नभोमध्यं गतेपि दिनकरे कर्णालम्बियज्ञसूत्रा वीथीषु मन्दं परिभ्रमन्तः कर्णजापेन द्विजिह्वतालम्बनेन द्यूतप्रसंगेन व्यर्थालापेन, नारदभावेन, परस्परकलहेन च कालं

पाययन्तो दैवात्कदाचिदत्रा गच्छेयुस्तदा नून मात्मभ्योऽत्यन्तविसजातीयान् दिवारात्रमविरामेण कार्येष्वव्यापृतान्, बोम्बाय् वासिनो जनानत्रलोक्याति महान्त विस्मय प्राप्नुयुरिति मन्ये। तिष्ठतु प्रासगिक मिदम्। प्रकृतमनुसरामः।

क्रमेण समीपमुपसर्पति नगरस्य शकटानुबन्धे बहुलीभवति जनसघश्शकटेषु। बोम्बाय्नगर एवो-पदशानि बाष्पशकटावस्थितिस्थानान्यास्मन्नेव मार्गे सन्ति। उपान्तिमे मस्जिद् ( Masjid ) नामके बाष्पशकटावस्थितिस्थाने सर्वेषा शकटाना कवाटिका स्ताळयन्त्रैर्ध्वट्टयन्ते। तत्स्थानात्प्रस्थिते गच्छत्येव शकटानुबन्धे प्रयाणचीटिका माहका. ( Ticket Collectors ) गृह्णन्ति पथिकेभ्यः प्रयाणचीटिका श्शकटाच्छकटमारोहणपट्टिकामार्गेण गच्छन्त॰, उद्घाटयन्ति च ताळयन्त्रान्।

अन्ततश्च प्रत्युषसि षड्घण्टा वादनसमये “ वि-क्टोरिया टेर्मिनस् ” नामक “ बोरीबन्दर ” अपर नामधेय मन्तिम प्रधान बाष्पशकटावस्थिति स्थान न केवल भारतएव, किंत्वन्यत्रापि द्वितीय मात्मन-स्सदृश न सहत इत्येव वदन्ति पर्यटका। बोम्बाय् नगरस्थाना दर्शनीयाना वस्तूना परिगणनाया क्रिम

माणायामिदं कनिष्ठिकामेवाधिष्ठातुं योग्यमिति नेय मतिशयोक्तिः । बाष्पशकटावस्थितिस्थानमिदमिटालियन् देशीय देवचन्दनगृहमनुकरोत्याकारेण । अत्युन्नतमेषु गोळकेषु सौवर्णाः कलशाश्शोभन्ते नितराम् । सुगृहीत नामधेयायाः विक्टोरिया चक्रवर्तिन्याः काचन शिलामयप्रतिकृतिर्घटिकायन्त्रंच महदेक मुच्चस्थाने स्थापिते स्तः । अधस्पटिकशिलाभिराचितः कुट्टिमः । भित्तयश्च नीलस्वर्णवर्णाभ्यां चित्रिता आकर्षयन्ति दर्शकानां दृष्टीः । शकटारोहावरोहस्थानं चात्यानाह परीणाहं नागपत्रै रुपर्यावृतै मोहयति मनः । आरोहावरोहस्थानस्य पार्श्वतएव वाजिशकटानामवस्था नायोपर्यावरणयुक्तं किञ्चिद्दीर्घाकारं स्थानमपि निर्मितमास्ते। आरोहावरोहस्थाने वर्तमानैर्जनै र्विनैव पादयो र्मृत्तिकास्पर्शं वाजिशकटारोहणं कर्तुंशक्यते । बहिर्निर्गमन द्वारस्तंभयो रुभयत श्शिलामयौ व्याघ्रौ सुसुन्दरौ तिष्ठतः ।

कियच्चिरं वर्ण्यताम् । सर्वथानुभवैकवेदनीयं रामणीयकमस्य स्थानस्येति विरमाम एतावतैव ।

रायचूरस्थाना द्बोम्बायपर्यन्त मार्गेऽधोलिखितानि बाष्पशकटावस्थिति स्थानानि प्रधानानि ।

| रायचूरनगरात् अर्धक्रोशाः । | मार्गमध्यावस्थित-स्थाननामानि । |
|---|---|
| २६ | कृष्णा । |
| ४१ | यादगिरि । |
| ६७ | वाडि । |
| ७४ | षहाबाद् । |
| ९० | गुल्बर्गा । |
| १३८ | करबगाम् । |
| १५१ | होटगि । |
| १६० | षोलापुरम् । |
| २०९ | बार्शि । |
| २६० | डिपमल् । |
| २७७ | दौण्ड् । |
| ३०४ | पूणा । |
| ३२८ | किर्की । |
| ३३४ | चिंचवाडि । |
| ३४५ | तालेगाम् । |
| ३६४ | लोनौलि । |
| ३८१ | करजट् । |
| ४०६ | अमरनाथ् । |
| ४१० | कल्याणि । |

| | |
|---|---|
| ४१७ | दिवा । |
| ४२२ | थाणा । |
| ४२६ | भाण्डुप । |
| ४३४ | कुर्ला । |
| ४३५ | सियोन् । |
| ४३८ | डाडार । |
| | पारेल । |
| ४३९ | कर्रीरोड् । |
| ४४० | चिंचपोकलि । |
| ४४१ | भायखला । |
| ४४२ | मस्जिड् । |
| ४४३ | विक्टोरिया टेर्मिनस् । |

बोम्बायनगरमिदं–इंग्लण्ड ( England ) देशे लण्डन् ( London ) नगरमिव, फ्रान्स् (France) देशे पारिस् ( Paris ) नगरमिव, अमेरिका ( America ) देशे न्यूयार्क् ( New-yark ) नगरमिव च भारते सर्वप्रधानमत्युत्तमंच ।

यद्यपि भारतेभारतराजप्रतिनिधेर्निवासस्थानभूतं कल्कत्ता ( Calcutta ) नगरमेव प्रधानमिवि वक्तव्यम्, अथापि समुद्रीयशोभां निवासिजनसंख्यां

पाणिज्याधिक्यंच पश्यतामस्माकं बोम्बायूनगरमेव भारते प्रधानमिति सुप्तप्रमत्त कुपितानामिव मुखान्निस्सरति शब्दः ।

बोम्बायूनगरवासिनां संख्या दिने दिनेऽभिवर्धत एव । १६६४ तमे खिस्ताब्दे तेषां संख्या दशसहस्र रूपैवासीत् । सैवक्रमेणाभिवृद्धा १६७५ तमे खिस्ता ब्दे ६०००० रूपासीत् । दशसु वर्षेषु पंचाशत्साहस्र जना अभिवृद्धा इत्यायाति अनेन लेखेन । शक्यते चानुमातुमनेन लेखेनाद्यत्विकजनसंख्या यद्यपि, कथयामोऽथापि वयमिव स्पष्टेनगरेऽस्मिन्निदानीं किंचि न्यूनाधिक भावेन चतुर्दशलक्षसंख्या जनाः प्रतिवसन्ति । यद्यपि च कल्कत्तानगरे मद्रास नगरे चाष्टलक्षाधिकसंख्या जनाः प्रतिवसन्ति । अथापि तयोर्नगरयो रतिविस्तृत भूमिभागस्थितत्वान्नैव मुप लभ्यते जनसंघस्तत्र ।

नगरेऽत्र प्रधानतमो भागो दुर्ग ( Fort ) शब्दे न व्यपदिश्यते । यद्यपि नास्ति परिघासालादिकं किमपि । अथापि यद्दाः फालादिदं नाम स्थानस्य स्तत्र व्यवहरन्ति जनाः । केचित्तुतर्कैकशरणाः पूर्वमत्र

दुर्गस्थितिं तर्कयन्त्येनेन नाम्ना । भवतु यथातथावा। अत्रैव भागे वसन्त्यांग्ला विशेषतः, विशेषतश्चांग्लाना पण्यवीथिका अत्रैव सन्ति । भागान्तरापेक्षयाऽस्य स्थानस्य रामणीयकंऽचात्यधिकम् । एस्प्लेनड् ( Esplanade )नामकस्य स्थानस्य रामणीयक मनुभवैव वेद्यम् ।

इतोनगरा द्वाष्पशकट मार्गद्वयं प्रवर्तते । तत्रैको " बोम्बाय्–बरोडा–मध्यभारत वाष्पशकटमार्गः, ( Bombay Baroda and Central India Railway ) अन्यश्च महाभारत द्वीप वाष्पशकट मार्ग., ( Great Indian peninsula Rail way ) आद्योमार्गो बरोडा–अहमदाबात्-अजमेर जयपुर नगराण्यतिक्रम्य डिल्लिनगर पर्यन्तं याति। अन्यश्च कल्याण ( Kalyan ) मण्माड् ( Manmad ) नगरे अति किम्य भूसावल् (Bhusawal) स्थानं प्राप्तो द्वेधा विभक्तो भवति । तत्रैका जब्बल्पूर माणिक्यपुरे ( Manikpur ) मतिक्रम्य प्रयागं ( Allahabad ) प्राप्नोति । अपरो नागपुरं Nagpur प्राप्य, वंगनागपुर वाष्पशकटमार्गेण ( Bengal Nagpur Railway संयुज्यते । *

* इदानीं तु देहली नगरम् ।

१८५३ वमे ख्रिस्ताब्दे बोम्बाय् नगरात्—थाना पर्यन्तो महाभारतद्वीप बाष्पशकटमार्गः परिनिष्पन्नो भूत्, १८६४ तमेच ख्रिस्ताब्दे बोम्बाय्—बरोडा मध्यभारत बाष्पशकटमार्गो बोम्बाय्नगरात्प्रवृत्तः ।

यूरोपखण्डभारतखण्डयोः पत्रगतागतमपि बोम्बाय् नगरादेव प्रथमतः प्रवृत्तम् । सूयस् कुल्या ( Suez canal ) मार्गे संपूर्णेसति साप्ताहिक पत्रवाहि बाष्प महानौकाया ( Mail Steamer ) गतागत मारभ्यत । १८९८ वमे ख्रिस्ताब्दे भारतायूरोपखण्ड प्रेष्यमाणानां पत्रिकाणा पादरूप्य परिमितभाराणां दशरूप्याणि, अर्धतोलकभाराणां पञ्चदशरूप्याणि, एकरूप्यभाराणां विंशतिरूप्याणि चेति प्रापणभृति रवर्तत ।

बोम्बायनगरे च सर्वाण्येव स्थानानि वस्तूनि च दर्शनीयानीत्यत्र नास्ति सन्देहः, अधो लिखितानि वस्तूनि स्थानानि च नितरां दर्शनीयानि ।

१. विलिङ्गटन् जलाधारयन्त्रम् ।
   Wellington Fountain.

२. रायल् आल्फ्रेड्नाविकगृहम् ।
   Royal Alfred sailar's home.

३. अपोलो नौकारोहणस्थानम् । Appola Bunder,
४. एस्प्लनेड् वीथिका । Esplanade Road
५. पुष्पितजलधारयन्त्रम् । Flora Fountain.
६. याट् सम्मेळनगृहम् । Yaght club
७. राजाबायीघटिकायन्त्रस्तूपिका । Rajabai Tower,
८. राजप्रतिनिधिवासगृहम् । Secretarait
९. विश्वविद्यालयगृहम् । University Hall.
१०. चार्टरेड् निधिगृहम् । Chartered Bank,
११. राजकीय नौकानिर्माणशाला । Government Dock Yard,
( एंट्रन्स् द्वारस्था ) Entrance gate.
१२. सैव टार्पेडोडग्नाम्ना । Ditto-TorpedoDock,
१३. सैव, डंकन् डग्नामिका । Ditto- Duncan Dock,
१४. सैव, वासीन्स्थानस्थिता ।
१५. सेण्ट-थोमास-देवालयः । st, Thomas Cathedral,

१६. B.I.S.N. जनवायासशाला ।
B. I. S. N. co's Office.

१७. विक्टोरिया टेर्मिनस्नामकं बाष्पशकटा-
वस्थिति स्थानम् । Victoria Terminus.

१८. नगररक्षणजनताशाला । Municipal office

१९. "टैम्स्-आफ् इण्डिया" समाचार
पत्रिकाशाला
Times of India Press Office.

२०. काफोर्ड् मार्केटनाम्नी सर्ववस्तु
विक्रयशाला
Crawford Market.

२१. अंजुमन्-इस्लम्नाम्नी महम्मदपाठशाला ।
Anjuman Islam shool

२२. एस्प्लनेडस्थानस्थो नगररक्षणसैनिक
विचारालयः ।
Esplanade-Police court.

२३. सर्वप्रधान पत्रिकाशाला ।
General Post office.

२४. एल्फिन्स्टोन् विद्याशाला ।
Elphinstone College.

२५. विक्टोरियाऽऽरामः । Victoria Garden.

२६. प्रधानवर्त्ताशाला । General Telegraph office.

एतदन्यान्यपि बहूनि रम्याणि दर्शनीयानि वस्तूनि स्थानानिच सन्ति ।

वाष्पमहानौकावस्थितिस्थानञ्चात्रत्यमत्यद्भुतम् । मद्रपुरे (Madras) कल्कत्ता नगरेपिच (Calcutta) सन्ति यद्यपि वाष्पमहानौकावस्थितिस्थानानि तथाप्यत्रत्यानि तदपेक्षयोत्तमानि । मद्रपुरे कल्कत्ता नगरेच सागरे हुगलीनद्याञ्च मध्येजल सुदूरेवस्थितासु वाष्पमहानौकास्वारोहण मल्पाल्पासु तरिष्वारुह्य मध्येजल गत्वा कर्तव्यंभवति । अत्रतु वाष्पमहानौकाः प्रिन्सेस्डक् ( Princes Dock ) नाम्नि स्थाने तीरेण सल्लग्नास्तिष्ठन्तीति केवलसोपानमात्रसाहाय्येन नौकारोहणं सुखकंभवति ।

नगरेत्र नानादेशवासिनो जना वाणिज्याद्यर्थमागता निवसन्ति । कालबादेवी ( Kalbadevi Road ) रथ्यायां विचरता पुरुषेणैकदैव सर्वदेशवासिनोपि

विद्युच्छक्त्या शकटचालनाय । यतः कुतश्चित्स्थानाद्यत्र क्कापि वा गच्छता नैकाधिका कळा व्ययितव्या । सर्वस्थानसाधारण्येनैकैव कळा प्रापणभृतिः । पञ्च पञ्च निमेष व्यवधानेन धावन्ति शकटानि । वाजि शकटानिच प्रथम ( First class ) द्वितीय ( Second class ) तृतीय ( Third class ) कक्ष्याभेदेन त्रिधावर्तन्ते । तत्र प्रथमकक्ष्या शकटानि विक्टोरियासंज्ञा ( Victoria ) न्येव विशेषत स्साधारणजनानां गतागतयो रुपयुज्यन्ते । एतान्यपि चतुश्चक्रयुक्तानि किंचिद्कुमाकारेणोपर्यावरणेन चर्म मयेन युक्तानि मनुष्यद्वयोपवेशन पर्याप्तस्थान युक्तानि चेन्नपुरे बहुभिर्धनिभिरुपयुज्यमानानि बहुमूल्यानि शकटान्यनुकुर्वन्ति । काञ्च्यादिषु दृश्यमानानि वेणु दळकटाच्छन्नानि चक्रद्वययुक्तानिवाजिशकटानीवात्रैक मपि नोपलभ्यते । द्वितीय तृतीयकक्ष्या शकटानि तु पेटिकाशकटानुकारीणि । चतुरंतानि चक्रद्वययुतानि वृषभ शकटान्यपि सन्ति बहुसंख्याकानि । वाजि शकटानां प्रापणभृतिस्तु दूरानुगुण्येन समयानुगुण्येन च नगरपरिपालनसभया निर्णीताऽऽस्ते । प्रापणभृति निर्णयसूचकं शकटनपत्रञ्च प्रतिशकटमन्तर्लम्बमान- मस्ति । वाजि शकटानां सारथिनस्सर्वेपि नगर



मोह्मय्या राज्यशासकाना सेक्रिटेरियेट् भवनम् ।

परिपालन सभांगीकृतै रेफरूपैः कंचुकादिभि रलं कृतास्सन्ति× ।

सर्वास्वपि प्रधानवीथिकासु रात्रिषु धूमदीपप्रकाशो ( Gas Light ) भवति । कचित्कचित्तु वैद्युतदीपा अपि सन्त्यारोपिताः, क्राव् फार्ड् मार्केट् ( Crawford Market ) नाम्न्यां सर्ववस्तुविक्रय शालायां, नगरपरिपालन सभाशालायां ( Municipal Office ) राजप्रतिनिधिस्थाने ( Secretariat ) न्यत्रच वैद्युतदीपा एव प्रकाशन्ते* । दीपस्तम्भाश्च किंचिन्न्यूनाधिकभावेन चत्वारिंशद्ध-स्तान्तरेण निखातास्सन्ति । रात्रौ वीथीषु पतिता सून्यप्यनाति श्रमेणान्वेष्टुं शक्यते । अनेनैव प्रकाशस्ये यत्ता ऽनुमातुं शक्यते । अल्पास्पासु वीथीषु तु केरोसिन् ( Kerosin oil Lamp ) तैलदीपा एवा रोप्यन्ते।

अत्र नगरे प्रायस्सर्वेपि जना जलयन्त्रद्वारेण लभ्यमानानि जलान्येव स्नानपानादिपूपयुंजते ।

---

× इदानीं मोटरशकटाना धावमानानां सख्याति महती । वृषभैरुह्यमानानि शकटानित्वच भारमात्रंवहन्ति ।

* इदानीं वैद्युतदीपा बहव. ।

क्वचित्क्वचित्तु सरांसि+ कूपाश्च सन्ति, वेहारस्थानस्था न्महातटाकात् ( Vehar Lake ) 'तुलसी' 'पोवायी' 'तानसा' स्थानस्थेभ्यो महातटाकेभ्यश्च शुद्धं जल मयोमयमहानाळद्वारेण प्रथमतो जलसंग्रह स्थानं प्राप्नोति । तत्र शोधकयन्त्र निहृतकल्मषं निधानेषु पूर्णं तिष्ठति । तत एव च सूक्ष्मायो नाळ द्वारेण नगरे सर्वत्र प्राप्यते । जलसंग्रहस्थाने च प्रधानं मलबार पर्वतं ( Malabar Hill ) वर्तते । तत्रैव शोधकयन्त्रमपि स्थापितं वर्तते । अत्युन्नतमा स्पार्वतप्रदेशा दयोमयनाळद्वारेण गच्छज्जलं नगरस्थेषु गृहेषु षष्ठे सप्तमे खण्डेपि प्राप्नोति । शुद्धजलप्राप्ते रियं व्यवस्था । सामुद्रजलमपि यन्त्रेणाक्षिप्त नाळ द्वारेण वीथिकास्वधो गच्छति । इद मेव वीथी सेकादिषू पयुज्यते ।

समुद्रमार्गेणा भ्यन्तरकन्दकेभ्यश्शत्रुभ्यो नगरस्या स्य रक्षणाय स्थानत्रये नगरेऽत्र राजकीयसेनानिवेशाय भूदुर्गा ( Land Forts ) निर्मितास्सन्ति । कोलाबाया मेको, मलबार पर्वत एको, महालक्ष्म्या

+ सरांसि सर्वाण्यपि मृदापूरितानि नैकमप्यत्र दृश्यते ।

मेक ब्रेति त्रय स्सेनानिवेशाः । समुद्रतीरदुर्गाः ( Harbour Forts ) श्च त्रयः " आयस्टर राक्" ( Oyster Rock ) " मिडल् ग्राण्ड् " ( Middle Ground ) " क्रोस्—आइलैण्ड " (Cross Island ) नामधेयाः । सर्वत्रैषु दुर्गेषु दशांगुळ गोळकप्रक्षेपिण्य प्षडंगुळ गोळकप्रक्षेपिण्य श्च शतघ्न्यः (10--Inch R. M. L. 10--Inch R. B. L. 6–Inch R. B. L. Guns ) शीघ्रमंत्रेपिण्यो यन्त्रशतघ्न्यश्च ( Quick fring and machine guns ) स्थापिता स्सन्ति । सैनिकेषुच यूरोपीयाः भारतीयाः श्च सन्ति बहवः ।

नगरेत्र सूत्रनिर्माण यन्त्रशाला ( Spinning mills ) वस्त्रनिर्माणयन्त्रशाला ( Weaving mills ) श्च सन्त्युपशतं । साधारण पट्टवस्त्रनिर्माणं रत्नकम्बलनिर्माणंच प्रवर्तते कासुचिद्यन्त्रशालासु । मधूच्छिष्ट वर्तिकानिर्माणशालापि काचिदत्र नवीनतयास्थापिताऽस्ति । धान्यावहननयन्त्रशालाः पिष्ट पेषण यन्त्रशालाश्च ( Grinding mills ) सन्ति काश्चित । लोहमयपदार्थ निर्माणशालानामपि नास्ति न्यूनता ।

इत्थं सर्वतोपि यन्त्रशालामयेऽस्मिन्नगरे यतोयतः प्रसरति दृष्टि स्ततस्ततो धूममुद्गिरन्तो गगन चुम्बिनो न्तस्सुषिरा धूमोद्गारस्तंभा दृष्टिपथमवतरन्तीति किमत्र चित्रम् । सहस्रदीधितिरपि मध्याह्नेपि धूमावरणेन धूम्रएवो पलक्ष्यते नेति नेयमति शयोक्तिः । हेमन्त शिशिरयोरोप कदुष्णो वातो वातीति नायं वस्त्व पलापः । अनभ्रेपि गगने स्तनितमाश्रूयते इतिनेयं मिथ्योक्तिः ।

पत्तनेस्मिन् प्रायस्सर्वएव गृहाः पञ्चषोर्ध्वखण्डा त्मकाः । एकखण्डात्मकास्तु गृहा नान्विष्टा अपि लभ्येरन्निति कथयन्न मिथ्यावादी भविष्यामि । शिरो गृहाणितु सर्वेषां नागपत्रै ( Zinc sheets ) र्भूमिष्ठकाभिश्चाघृतानि दृश्यन्ते प्रायः । केचितु सुधेष्ट कामयावरणाद्दृढाः । गृहाश्चात्रत्यास्सर्वे काष्ठप्रचुराः । अतिमहतोपि गृहस्य बहिर्भित्तय एव केवलमिष्टकाभिः खण्डोपलैर्वानिर्मीयन्ते । आन्तरास्तु फलकैः वेणुकटै श्च प्रायोनिर्मीयन्ते । गवाक्षेषु लोहशलाकानिधान मत्र विशेषतो न भवति ।

कुबेरस्येदं नगरम् । नात्रदरिद्रेण सुखजीवनं यतुंनश्यते । वस्तुतस्तुमर्व एवात्रत्या येन केनाप्युपा-

येन निजजीनिकापर्याप्तधनार्जनरता इत्यत्यन्त दरिद्रा नैवोपलभ्यन्ते। दैवहतास्तु केचिदत्रापि भिक्षामटन्ति। कार्यान्तरे प्व्रवर्तमानाः स्वभाव सुलभया तंद्रया भान्ता इति नूनमेते वैकुण्ठमपिगता इमामेव वृत्तिं बहुमन्येरन्नित्यत्र नास्ति विस्मयः। धनिनांतु सर्वदा सर्वमपि वस्तुजातमत्र सुखलभ्यमेव। प्रयोकालेपि दृश्यन्ते फलानि शलाटवः पुष्पाणिचात्र। नेयं कांच्या इवविपणिः, यत्र लवणे लब्धे तिंत्रिणीफलं न तिंत्रिणीफले लब्धे लवणं नेतिन्यायः प्रवर्तते। प्राय स्सर्वेप्यधो गृहा आपण रूपाएवात्र दृश्यन्ते।

कियद्वा वर्ण्यताम्। अस्तिबहुवर्णनीयम्। अथापि चिरादेतन्नगरमेवाधि कृत्यविलिखन्पाठकानां वैमनस्या द्विभ्यदितएव विरमामि।

शकटानुबन्धश्च कोलाबास्थानाद्यथोक्तसमये प्रस्थितो मध्ये केषुचित्स्थाने स्वल्पमल्पं समयं तिष्ठन् रात्रौ २–२५ घण्टावादनसमये सूरत् ( Surat ) नगरं प्रापत् । सूरत्नगरंचेदं पूर्वं कतिपयशतकेभ्यो घूर्जरेषु प्रसिद्धतम मासीत् । एतत्सदृशं घूर्जरेषु किमपि नगरं नासी दित्येवेतिहासविदामभिप्रायः । इदानी मपीय मसर्वप्रधानापि प्रधानेष्वन्यतमेति वक्तुं शक्यतएव । १७९७तमे ख्रिस्ताब्दे स्यां नगर्यां मष्ट लक्षसंख्या ( ८०००००) जनाअवसन् । ततो बोम्बाय् नगरे जनैः क्रमेणापूर्यमाणे १८४१ तमे ख्रिस्ताब्दे केवल मशीतिस्सहस्राणि जनाअत्रावसन् । पुनरपि१८४७तमात् ख्रिस्ताब्दात् क्रमेणाभिवर्धमान जनसंख्या१८७२तमेऽब्दे१०७०००रूपा भवत् ।

नगरेत्र दर्शनीयानि वस्तूनि—दुर्गः ( Fort ) घटिकायन्त्रस्तूपः ( Clock Tower ) वैद्यशाला ( Hospital ) इत्यादीन्येव । नगरात्सार्धकोशदूरे प्रवहति तपतीनदी, ( Tapati ) यस्या उपरिकिंचि न्न्यूनाधिक भावेन सपादत्रिशतहस्तदीर्घोयामयस्सेतु र्निर्मितआस्ते । स्थानादस्मान्महाभारत द्वीपकल्पवाष्प शकटमार्गे ( Great Indian Peninsula Railway ) स्थंजलग्रामं ( Jalgon ) याव त्कश्चि च्छाखामार्गो गच्छति ।

सूरतनगरात् २-३७ घण्टाकाले प्रस्थितो वाष्प शकटानुबन्धः ४-५७ घण्टाकाले बरोडानगरं प्राप्तत् । नगरं चेदं गैकवारमहाराजस्य राजधानी । नगरेऽत्र राजप्रासादो राजोद्यानं च प्रधानतया दर्शनीयतमे स्थाने । गजयात्रुपशालायां वर्तमाना रजतमय्यः काश्चित् सुवर्णमयी चैकेति काश्चिल्लवणगोलि ( Guns ) दर्शनीयतमाः । अस्यैव महाराजस्यैकस्य निकटे रजतमयी स्वर्णमयीच दानसी कुम्भेऽपि भारतेऽस्ति । चित्रमण्डपश्च काश्चित् दर्शनीयस्मान्ति । नगरान्नातिदूरे भारतराजप्रतिनिधिकार्यदर्शिनो ( Residents ) निवासस्थान मस्ति ।

बरोडानगरात् ४-५७ घण्टाकाले प्रस्थित स्तच्छकटानुबन्धो ५-३९ घण्टाकाले आनन्दनामकं ( Anand ) वाष्पशकटाग्निरथस्थानं प्राप्त् । इदंच स्थानं गोधरा—रतलाम वाष्पशकटमार्गस्यारम्भ स्थानम् । अयंच शाखामार्गः कतिपय वर्षेभ्य. पूर्वमेव निर्मितोभूत् । एतन्मार्गनिर्माणात्पूर्वं काश्चे बरोडा मध्यभारत वाष्पशकटमार्गान्तःपातिनो यतः सुर् त्रिदविधा स्थानान्मालवदेशाय राजपुताना मालवा वाष्पशकटमार्गो ( Rajputana Malwa Rail-way ) ' रतलाम ' नगरं ' इन्दूर ' नगरमवधि-

कामन्यद्वा यत्किंचित्स्थानं जिगमिषुभिः बाम्बे बरोडा मध्यभारतयाष्पशकटपथजनतीयं शकटानुबन्ध मारुह्य याम्बेनगरं—अजमेरनगरं वा गत्वा, ततो महाभारत द्वीपकल्प बाष्पशकटपथजनतीयं राजपुताना माळवा बाष्पशकट-पथ-जनतीयं वा शकटानुबन्धमारुह्य गन्तव्यमभवत् । तेन बहुधनव्ययचिरकालातिपातादिभिः महती हानिः कष्टंच जनानां जायमानमभूत् । एतन्मार्गनिर्माणानन्तरं सर्वं तत्कष्टं परिहृतमभवत् । अधः प्रदर्शितेन मानचित्रेणायमर्थस्स्पष्टीभवेत् ।




उपरि प्रदर्शितस्य चित्रस्य यथावस्थिताकारत्वाभावेपि शिरोवेष्टनन्यायदूरादिबोधने काम मुपकारी भवत्येव । आनन्द स्थानात् ५—४५ घण्टाकाले प्रस्थित शकटानुबन्धः ७—१० घण्टाकाले प्रातः अहमदाबाद् ( Ahmedabad ) नगरं प्रापत् ।

नगरं चेदं १४११ समे ख्रिस्ताब्दे ' अह्मदशा ' नाम्ना माहम्मदनरपतिना स्थापितं निर्मितं चाभवत् । नगरेऽत्र दर्शनीयेषु स्थानेषु माहम्मदानां केषांचि त्समाधिस्थानान्येव प्रधानानि । नगरेऽत्र तूलनिर्बीजी करणयन्त्र, तूलग्रन्थिबन्धनयन्त्र, सूत्रनिर्माणयन्त्र, वस्त्रनिर्माणयन्त्र, पट्टवस्त्रनिर्माणयन्त्राणि सन्ति स्थापितानि । एतन्नगरीयाणि पट्टवस्त्राणि दृढतायां दर्शनीयतायांच प्रसिद्धानि ।

अह्मदाबाद नगरमिदमत्युन्नतेन दृढतमेन केन चित्प्राकारेणावृतमास्ते । प्राकारश्चायापि नवनिर्मित इव परिदृश्यमानोऽशिथिलमूर्तिश्च वर्तते ।

नगरस्यास्य समीपएव प्रवहति साबरमती नदी । प्रायो नगरस्था जनास्स्नानपानादिष्वेतदीयमेव जल मुपयुञ्जते । नगरे कूपा अविरलसंख्या एव, येषामपि जलमतिक्षारं पानायानुपयुक्तं वर्तते । एत-न्नदीजलमेवच नालिकाद्वारा नगरं नीतं सर्वेषामुप-योगाय भवति ।

नगरेऽत्र वस्त्राणि नानाविधानि विनैव यन्त्र-साहाय्यं निर्मीयन्ते । तानिच वस्त्राणि न हीरान्तरा-न्तराणि वस्त्राणि येषाम्मा विरूपतया धारयन्ति, अथापि दृढतायां सर्वेऽनुपमतानि परिदृश्यन्ते ।

नगरादस्मात् दक्षिणपश्चिमतः " पोरबंदर " प्रभृतिस्थानगामी कश्चिद्वाष्पशकट—शाखामार्गः प्रारभते, येनैव द्वारकां जिगमिषुभि र्गन्तव्यं भवति । " राजपुताना—मालवा " वाष्पशकटमार्गश्चेतः प्रवर्तते । बाम्बे—बरोडा—मध्यभारतबाष्पशकट मार्गश्च परिसमाप्नुतेऽत्र । इत्थमत्र बाष्पशकटमार्ग-त्रयस्य सम्मेळनं भवति ।

बाम्बेनगरादेतन्नगरपर्यन्ते बाष्पशकटमार्गेऽधः प्रदर्शितानि बाष्पशकटाश्रयस्थानानि (Stations) प्रधानानि ।

| बाम्बे नगरात् अर्धक्रोशा. । (Miles from Bombay) | बाष्पशकटाश्रय स्थानानि । (Stations) |
|---|---|
| | कोलाबा ( बंबाय ) |
| २ | चर्चगेट ( बंबाय ) |
| ४ | माण्ट्रोड ( बंबाय ) |
| ८ | दादर |
| ११ | बनोरा |
| ५८ | पालगढ |
| १०९ | डामन्रोड् |
| १२५ | बलसार |
| १४९ | नवसारि |

| | |
|---|---|
| १६७ | सुरत् |
| १९७ | अंकलेश्वर |
| २०३ | भरोच् |
| २२९ | मियागामः |
| २४८ | बरोदा |
| २७० | आनन्दः |
| २८१ | नदियाद् |
| २९२ | मेहमदाबाद् |
| ३१० | अहमदाबाद् |

४–११–०४ दिने मध्याह्नात्परं २–५० घण्टा वादनसमये अहमदाबाद (Ahmodabad) नगरात् अजमेर (Ajmere) नगरं प्रति " राजपुताना मालवा-वाष्पशकटपथीय (Rajputana Malwa Railway) शकटानुबन्ध मारूढः प्रस्थितोऽभवम्।

वाष्पशकटानुबन्धमाऽहमदाबाद—नगरात्प्रस्थितः क्रमागतमत्र वाष्पशकटावस्थितिस्थानेषु विश्रमन् प्रायं ६–३७ घण्टावादनकाले सिद्धपुरमगाम्। अत्र वाष्पशकटावस्थितिस्थानसमीप एव प्रवहति सरस्वती नदी। पुष्करोऽत्र च गमनवत्याः स्नेहकाः प्रवाहोऽवलोक्यते। अन्यत्र तु प्रयागादिषु न तस्या दर्शनं भवति।

क्षेत्रमिदं मातृगयेति व्यवह्रियते । परलोकगतां मातरमुदिश्यात्र श्राद्धमाचरन्ति जनाः । अत्रापि कश्चिदक्षयवटो वर्तते । तस्यैवच्छायायां मातृश्राद्धे पिण्डदानं क्रियते । अक्षयवटस्यात्र मूलं प्रयागे मध्य भागो गयायां शिरश्चास्त इति किंवदन्ती प्रसिद्धा । बहवस्तीर्थयात्रापरा अत्रावतरन्ति ।

इतो निर्गतश्च शकटानुबन्धः९—२५घण्टावादन काले "'आबूरोड" ( Abu Road ) स्थानमवापत् । बाष्पशकटावस्थितिस्थानात् सार्धाष्टक्रोश दूरे आबूपर्वतः ( Mount Abu ) वर्तते । अयंच पर्वतो राजपुत्रस्थानवासिनामांग्लानामन्येषां च ग्रीष्मनिवासस्थानम् ।

पर्वतस्यास्य शिखरेषु सर्वोन्नतं शिखरं किञ्चिन्न्यूनाधिकभावेन चतुस्सहस्रहस्तोच्छ्रायम् । गिरावत्र प्रायस्सर्वेषामेव राजपुत्रस्थानवासिनां नरपतीनां गृहाणि सन्ति । स्थानंचेदं सिरोहिराज्यान्तर्गतम् । ग्रीष्मकाले बहुभिर्धनिभिर्जनैः परिपूर्णोयं गिरिर्दर्शनीयतमो भवति ।

आबूरोड् स्थानान्निर्गतश्च शकटानुबन्धः मार्वार ( Marwar ) नामकं बाष्पशकटपथसङ्गमस्थानं

( Junction ) अर्धनिशातः परं २-२५ घण्टा वादनसमये प्रापत् । इतस्स्थानात्सिंधुदेशस्थं हैदराबादनगरं ( Hyderabad ) यावत् कश्चिद्वाष्पशकटशाखामार्गो गच्छति । एतन्मार्ग निर्माणात्पूर्वं सुदूरं पश्चिमोत्तरतः पाञ्चालान्गत्वा ततो दक्षिणतस्सुदूरं गमनं सिंधुदेशस्थ—हैदराबादनगर गामिना कर्तव्यमभूत् ।

मार्वारस्थानात्प्रस्थित श्शकटानुबन्धः परस्मिन्दिने ५-११-०४प्रातः ६-५५घण्टावादनसमये अजमेर ( Ajmere ) नगरमवाप ।

नगरमिदं राजपुत्रस्थाने ( Rajputana ) प्रधाननगरेष्वन्यतमं परितः केनचित्साकेन शिलामयेन परिवृतमास्ते ।

अत्र नगरे 'मेयोकालेज' (Mayo College) नाम्नी विद्याशाला वर्तते, यत्र राजकुमाराश्शिक्ष्यन्ते । माहम्मदानां देववन्दनशाला काचिदत्र श्रेष्ठतमाऽऽस्ते। राजपुताना—मालवा बाष्पशकटपथजनतायाः कार्या-लयश्चात्र वर्तते ।

अहमदाबादनगरा देतन्नगरपर्यन्त बाष्पशकटमार्गे प्रधानानि बाष्पशकटाश्रयस्थानानि—

| बाम्बे नगरात् अधकोशाः । (Miles from Bombay) | बाष्पशकटाश्रय स्थानानि । (Stations) |
|---|---|
| ३१० | अहमदाबाद् |
| ३२६ | कलोल् |
| ३५३ | मेहसाना |
| ३७४ | सिद्धपुरम् |
| ३९३ | पालन्पुर |
| ४०० | चित्रासनी |
| ४२५ | आबूरोड |
| ४४१ | रोहेरा |
| ४५३ | पिण्डवारा |
| ४७१ | मोरी-बेरा |
| ४७६ | हरिन्पुरा रोड् |
| ५१० | सोमेश्वर |
| ५१४ | भिन्वालिया |
| ५२९ | मार्वार |
| ५४१ | सौजत्-रोड् |
| ५७४ | सेन्द्रा |

| | |
|---|---|
| ५८२ | ब्यावर |
| ६१५ | अजमेर |

अजमेरनगरात्पश्चिमतस्सार्धक्रोशत्रयदूरे पुष्कर क्षेत्रमस्ति । पुष्कराजमेर नगरयोर्मध्ये नागाचलो नाम कश्चिदस्ति गिरिः । गिरिमेन मतिलंघ्यैवाजमेर नगरात्पुष्करं गन्तव्यं भवति । घोटकद्वयेनोह्यमानं पेटिकाशकट चतुःपुरुषोपवेशनयोग्यस्थानयुक्तं पुरुष त्रयोपवेशनस्थानवच्चान्यादृशं शकटमत्र पुष्करगमना योपयुज्यते ।

पुष्करक्षेत्रस्य महिमातिशयो भारतादिषु विशेषतः प्रपञ्चित इति नात्र तद्वेदनमावश्यकम् । बालपुष्करं मध्यपुष्करं वृद्धपुष्करं चेति तटाकत्रयं वर्तते । तत्र बालपुष्करमेव प्रधानं यन्निरुपपदपुष्करशब्देन व्यवह्रियते । अस्यैव तीरे ब्राह्मणबहुलो ग्रामो वर्तते। ब्राह्मणाः प्रायस्सर्वेपि पौरोहित्येन जीवन्ति । तत्त- द्यजमान धनतारतम्यानुसारेण पुरोहित ब्राह्मणा अप्येते धनतारतम्यमावहन्तो दृश्यन्ते । देवे सम्यग्वृष्टे पूर्णे जलेन पुष्करतटाके प्रदक्षिणमस्य क्रोशदीर्घं भवति । पार्श्वत्रये शिलामयसोपानपङ्क्तिभिः प्रकाशते तटाकम्।

पुष्करस्य पूर्वोत्तरदिशायां मध्यपुष्करं वृद्धपुष्करं च वर्तेते । तत्र वृद्धपुष्कर मगाधं सुविपुलं च ।

मध्यपुष्करं स्वतिस्वल्पपरिमाणं परितो निर्मितसोपान मत्यल्पजलयुतं च ।

पुष्करग्रामस्य पश्चिमभागे चतुर्मुखस्य देवस्यालयः, दक्षरतः पादक्रोशदूरे नात्युच्चपर्वतशिखरे गायत्र्या देव्याआलयः, पश्चिमतः क्रोशत्रयदूरे उच्चतमे पर्वत शिखरे सावित्र्या आलयश्च वर्तन्ते ।

पुष्करस्योत्तरपूर्वभागे रेखारूपेण कृतस्रवणा पश्चिमतः क्रोशत्रयदूरे धृतमहाकारा सरस्वती नदी प्रवहति ।

दक्षिणतो वर्तमाने नागाचले वसिष्ठविश्वामित्रा-दीनां महर्षीणामेकान्त—दर्शनीयाः पुण्या आश्रम भूमयः पावयन्ति दर्शकवृन्दम् ।

भगवतो वराहस्य कश्चिदालयस्सूक्ष्माकारो ग्रामपूर्व भागे वर्तते । अयं पुरातन इत्यत्रत्याः कथयन्ति । बहवश्च द्रव्याभिलाषया तत्रतत्र निर्मिता अन्येप्यालयाः।

पुष्करस्योत्तरतीरे भगवतो वेणुगोपालस्य नाति महान् दिव्यालयो वरीवर्ति, यो रंगनाथमन्दिरमिति व्यवह्रियते। अयंचाष्टपञ्चाधिकवर्षेभ्यः पूर्वं निर्मितः।

श्रीकाञ्ची नगराभिजनस्य प्रतिवादिभयङ्करार्य वंशस्य अनन्ताचार्यनामधेयस्य गुरो रन्तेवासिना पूर्णमल् नाम्ना श्रेष्ठिना निर्मितोयं दिव्यालयः । अस्यैवानन्तार्यस्य सुविपुलं गृहं काञ्च्यां कांचीपूर्णवीथ्यां नगर रक्षणसैनिक—शालानिकटे कालवशादन्यहस्तगतमद्ययावद्वर्तते । अनेनैव च समर्पिता देवदेवाय वरद॰ राजाय मकरकण्ठिका बहुमूल्या श्रेष्ठरत्नजटिता चेति कांचीवासिभिस्संस्तूयते ।

दिव्यालयोयं यद्यपि न द्राविड देशीयान् भगवदालयान् कात्स्न्र्येनानुकरोति, अथापि मात्रयानुकुर्वाणो देशेत्र सर्वश्लाघ्यतामेवासीदति ।

प्रथमतोऽयं दिव्यालय एतद्देशीयै शिल्पिभिरेव कृतारम्भ एतद्देशीयशैलीमनुसृत्य निर्मीयमाणः कियतः कालादनन्तरं द्राविडदेशादागतैस्स्थपतिभिः पर्यपूर्यतेति क्वचिदेतद्देशीयालयच्छायां क्वचिच्च द्राविडदेशीय मन्दिरच्छायां वहति ।

## आलयमानचित्रविवरणम् ।

१. प्रधानबिम्बस्य श्रीवेणुगोपालस्य गर्भगृहम् ।

२. अस्मिन् स्थाने विष्वक्सेन शठकोप कासारभूत महदाह्वयभट्टनाथ श्रीभक्तिसार कुलशेखरयोगिवाह भक्तांघ्रिरेणु परकाल मधुरकवि यतिराज वरवरमुनी नामर्चाविग्रहास्सन्ति। एषु यतिराज वरवरमुन्यो र्मूलोत्सवमूर्ती स्तः । अन्येषामुत्सवमूर्तयः केवलम् ।

३. श्रीरंगनाथस्य गर्भगृहम्.

४. मुखमण्टपः

५. ध्वजस्तम्भः

५. बलिपीठः

७. प्रदक्षिणस्थानमनावृतम्

८. श्रियो गर्भगृहम्

९. दर्पणगृहम्

१०.गन्धगृहम्

११.धान्यालयः

१२.श्रीगोदाया गर्भगृहम्

१६.अनन्तार्यस्य

१४.यागशाला

१५.अधिवासगृहम् :

१६.प्रथमावरणगोपुरद्वारम् , षण्डलयात्मकगोपुरम्

१७.सामग्रीशाला

१८.वस्त्राभरणशाला

१९.महानसद्वारम्

२०.महानसम्

२१.वाहनगृहम्

२२.आलयदक्षिणद्वारम्, आलयाद्बहिर्निर्गमनाय ।

२३.गोशाला

२४.अभ्यागतावतरणस्थानम्

२५.अध्ययनोत्सवमण्टपो-वाहनमण्टपोवा

२६.अधिकारिणो वासस्थानम्

२७.व्यवहारशाला

२८.सिंहद्वारम्

२९.लेख्यशाला

३०.उष्णजलगृहम्

३१.भृगुवासरोत्सवारामः

३२.कूपः

३३.द्वितीयावरणप्रदक्षिणस्थानमनावृतम्

३४.वीथिका

३५.पुष्करम्

आलयेऽत्र भगवन्मूर्तीनां प्रतिष्ठा श्रीप्रतिवादि भयङ्करानन्ताचार्यस्य परमपदप्राप्त्यनन्तरं तत्स्थानाभिषिक्तेन प्रतिवादिभयङ्कर—श्रीनिवासाचार्येण विक्रमाब्दे १९००मिते निर्वर्तिता महता समारंभेणेति लेखैरवगम्यते ।

आलयेऽत्र त्रयोर्चकास्त्रयः परिचारकास्त्रयो माहानसिका एकोध्यापक एकोधिकारी चेत्येकादश द्राविड देशीयाश्श्रीवैष्णवाः कार्यं निर्वहन्ति भगवदाराधनस्य । अन्येच छत्रधारक विमानधरवाद्यवादक मालाकारोद्यानपालकद्वारपालकाद्या एतद्देशीया एव ।

अत्रालये सर्वा अपि रीतयो द्राविडदेशीयेन्दुपुर परिमळरङ्गनाथालयरीत्यनुसारिण्यः । सर्वंच कार्यजातं यथोचितं सशुचितया सरण्या प्रवर्तते ।

२५–११–०४ पुष्करात् ।

प्रतिवत्सरं कार्तिकशुक्लैकादशीमारभ्य पूर्णिमां याव त्तिथिवृद्धिह्रासावनुसृत्य पञ्च षड्वा दिवसाः पुष्कर स्नानस्य पुण्यःकालः । एषु दिवसेषु परस्सहस्रं जना नानादेशेभ्यः पुष्करस्नानायागच्छन्ति । जनसंख्या द्वित्रलक्षात्मिका भवेत्।यदा भारते महामार्या पदं निहितं तत आरभ्य राज्यशासकैः प्रतिषिद्ध्यन्ते जनाः पुष्कर गमनात् । अतस्तावन्तो जना इदानीं न सम्मिळन्ति ।

कतिपय दिवसेभ्यः पूर्वं सोयं पुण्यकाल स्समपद्यत । तदात्वे पञ्चाशत्सहस्राधिकसंख्या जनास्समामिळन् । एतादृशेषु जनसम्मर्दसमयेषु वणिजां क्रय्यपदार्थानयन चिरादनुवृत्तमिति समये त्रापि बहवः पदार्थाः क्रय्यास्समागच्छन् । तत्र चत्वारिंशत्सहस्राधिकसंख्या बलीवर्दाः, दशसहस्राधि का वाजिनः, तावन्त एवोष्ट्राः पञ्चपा हस्तिनश्चागता अभूवन् । तुरगेषु दशसहस्ररूप्यमूल्यः कश्चिज्जा- त्यश्वोपि समागतोभूत् । एषु वृषभा उष्ट्राश्चाधिक संख्या विक्रीता अभवन् । आगतेष्वर्धमश्वाश्च । गजश्चैकः केनचित्क्रीतः । अस्मद्देशीयोत्सवादि सम येषु वृषभाणां महिषाणाञ्च सम्मेळनं यद्यपि भवति । अश्वा हस्तिनश्च तत्र नाम्नापि न श्रूयन्ते । अयमेव धनिदरिद्रदेशयोर्भेद इव ।

देहलीनगरात् ( Delhi )

(२-५-०६)

इतः पूर्वं अजमेर ( Ajmere ) नगर याव त्पर्यटनस्य वृत्तान्ता अलिख्यन्त । अजमेरनगराच्च प्रस्थि तोहं यद्यपि कांश्चन मासान्मालवदेशेषु मरुस्थल्यां च पर्याटम्, अथापि तद्देशपर्यटनोदन्ता न सुहृन्मनो

विनोदाय स्युरिति सानुपेक्षमाणोन्यदेशपर्यटनोदन्त विलेखन एवेदानीं प्रवृत्तोस्मि ।

अजमेरनगराद्रात्रा वम्रघण्टावादनसमये पत्रवाहि धूमशकटानुबन्धेन ( Mail Train ) प्रस्थितोहं १–५–०५ दिने प्रातस्सप्तघण्टावादनसमये देहली नगरं प्रापम् । अजमेरनगराद्देहली नगरपर्यन्ते बाष्प शकटमार्गे अधोलिखितानि बाष्पशकटाश्रयस्थानानि ( Stations ) प्रधानानि—

| बाम्बे नगरात् अर्धक्रोशाः | बाष्पशकटाश्रय स्थानानि |
|---|---|
| ६१५ | अजमेर |
| ६६६ | कृष्णगड |
| ६६४ | फुलेरा |
| | [ इत.स्थानात् जोधपुर बीकानेर बाष्पशकटमार्गस्थं मेरटारोड नामकं संगमस्थानं यावत्कश्चन शाखामार्गः प्रवर्तते । ] |
| ६९९ | जयपुरम् ( इदं नगरं जयपुराधीशस्य प्रसिद्धस्य राजधानी ) |
| ७०५ | सांगानेर |
| ७२३ | झिर |

| | |
|---|---|
| ७७५ | चांदिकुयी (इतःस्थानादागरापर्यन्तं कश्चिद्बाष्पशकटशाखामार्गो याति ) |
| ७७० | राजगड |
| ७९२ | अल्वर ( कस्यचिन्नरपते राजधानी । ) |
| ८२१ | अजेरका । |
| ८२९ | बेवल् |
| ८३८ | रेवाडी । ( इदमपि कस्य चिच्छाखा धाप्पशकटमार्गस्य संगमस्थानम् ।) |
| ८६४ | गढी- हर्सरु ( इदमपि तथा ) |
| ८७० | गुरग्रामः |
| ८९० | देहली-दिल्ली |

देहलीनगर मिदं दिल्लीशब्देन प्रायो व्यवह्रियते। " शाहजहानाबाद् " इत्यस्य नगरस्य नामान्तरम्। शाहजहान्नाम्ना माहम्मदनरपतिना नगरमिदानीं परिदृश्यमानं १६४० तमे खिस्ताब्दे निर्मितं शाह जहानाबाद् इति नाम्ना भूपितश्चाभूत्।

पाश्चात्यदेशे सर्वप्रधानं नगरमिदं यमुनाया दक्षिणे तीरे वरीवर्ति। किंचिन्न्यूनाधिकभावेन द्विलक्ष संख्या जनाः प्रतिवसन्तीति राजकीय जनगणनया वगम्यते।

नगरमिदं शाहजहाननरपति निर्मितेनाष्टादश हस्तोच्छ्रायेणाष्टहस्तविस्तृतेन शिलामयेन तत्रतत्रेदानीं शीर्णतामुपगतेन महता प्राकारेण त्रिषु पार्श्वेषु समावृतमस्ति । किंचिन्न्यूनाधिकभावेन प्राकारोयं पादोन क्रोशद्वयदीर्घ इति परिगण्यते । परिखयाच सर्वतस्समावृतः प्राकारः । पूर्वदिशायांच नगरमनु पूर्वं यमुना नदी प्रावहत् , इदानीं त्वल्पीयसि दूरे प्रवहति ।

नगरेत्रेदानीं दशद्वाराणि प्रधानतया वर्तन्ते । तेषूत्तरतः " काश्मीरदर्वाजा " " मोरीदर्वाजा " इति द्वारद्वयम्, पश्चिमतः " काबूल्दर्वाजा " " लाहोरदर्वाजा " इति द्वारद्वयम्, निरृतिकोणे " फरोस्खानादर्वाजा " " अजमेरदर्वाजा " इति द्वारद्वयम्, दक्षिणतः ' रूमदर्वाजा ' ' दिल्लीदर्वाजा ' इति द्वारद्वयम्, पूर्वतः " राजघाट्दर्वाजा " इत्येकम्, ऐशान्ये" कल्कत्तादर्वाजा " इत्येकं, च वर्तन्ते ।

नगरस्य पूर्वभागे यमुनाया दक्षिणे तीरे दर्शनीयं दुर्गमेकमास्ते । दुर्गश्चैदे दक्षिणोत्तरतो द्वात्रिंशदुत्तर शताधिक द्विसहस्रहस्तदीर्घं, पूर्वपश्चिमतष्षट्पञ्चयुत्तर सहस्रहस्तविस्तृतम् । दुर्गस्य त्रिषु पार्श्वेषु रक्तवर्णोपल निर्मिता भित्तिरत्युन्नता, पूर्वतश्च यमुना नदी । यमुना नदीच पूर्वं दुर्गमनुप्रावहत, इदानीं त्वर्धक्रोशदूरे प्रवहति ।

शाहजहान् नाम्ना माहम्मदनरपतिना १६३८तमात् खिस्ताब्दात् १६४८तम खिस्ताब्दपर्यन्तकाले निर्मित मिद दुर्गम् । दुर्गेचेदानीं ' दिवाने-आम् ' ' दिवाने खास ' ' मोतीमसजिद् ' नामानि गृहाणि मुख्यतया दर्शनीयानि । पश्चिमद्वारेणान्तः प्रविष्टस्य पूर्वाभिमुख गच्छतः पुरुषस्य प्रथमतः ' नौवत्खाना ' नामक गृह दृष्टिपथमवतरति । अत्र पूर्वं वाद्यानि वाद्यमानान्यासन् । तस्य पूर्वतो ' दिवाने-आम् ' नामक सभागृहम्, तस्यापि पूर्वतः किंचिदुत्तरेण ' दिवाने खास् ' नामक सभागृह, तस्योत्तरपश्चिमतो ' मोती मस्जिद् ' नामक देववन्दनगृह चास्ते ।

' दिवाने-आम् ' नामक सभागृह रक्तवर्णश्लक्ष्ण प्रस्तरमय त्रिंशदुत्तरशतहस्तदीर्घं, शतहस्तविस्तार एकतो भित्त्या ४६ स्तम्भैश्चोह्यमानपटल मनो हरति दर्शकवृन्दस्य । अस्य मध्यभागे भित्तिमनु पड्ढस्तोन्नत स्थाने चतुस्तम्भयुतो नानावर्णप्रस्तरखचिततया नवरत्नखचित इव दृश्यमानः कश्चिच्छ्वेतप्रस्तरमयो मण्टपोऽस्ति । अयमेव मण्टपसिंहासनतया ' शाह जहाना ' दिभि नरपतिभिरुपयुज्यमान आसीत् । सर्वजनाना महती सभात्रैव निर्वर्त्यमानाभूत् ।

' दिवाने-खास् ' नामकं सभागृहं च मन्त्रिणा मन्येषां चाधिकारिणां परं सम्मेळनार्थमुपयुज्य मानमभूत्। इदंच. शतहस्तदीर्घं षट्षष्टिहस्तविस्तृतं श्वेतप्रस्तरमयं च। श्वेतप्रस्तरमयानां स्तम्भानामधो भागे नानावर्णप्रस्तरखण्डनिर्मितानि चित्राणि परिदृश्यन्ते। स्तम्भाः पटलं च पूर्वं सौवर्णपत्र मण्डितं नानारत्नखचितं चाभूदिति कथयन्त्यत्रत्याः।

सभागृहस्य मध्ये पूर्वतो भित्तेस्समीपे श्वेतप्रस्तरमयं चतुष्पदं महत्पीठमस्ति। अस्यैव पीठस्योपरि नाना रत्नखचितं मयूरसिंहासनं सप्तकोटिरूप्यमूल्यं नरपते रुपवेशनाय पूर्वं निहित मासीत्, यदिदानीं फारस् देशे वर्तते। सभागृहस्यास्य शिल्पशैली मवलोक्य बहवः प्रसिद्धतमाश्शिल्पिनोपि चित्रीयन्ते।

सभागृहस्यास्योत्तरतो महत्खण्डत्रयात्मकं श्वेत प्रस्तरमयं स्नानगृहम्। तस्य पश्चिमतस्सभागृहस्यो त्तरपश्चिमतः ' मोती मस्जिद् ' नामकं देववन्दन गृहं चास्ते।

देहलीनगरे यमुनायाः कुल्या प्रवहति। वैद्युतदीपै रुद्दीपिता भवति रात्रौ नगरी। प्रधानतमा दश रथ्या विस्तृतास्सुन्दरतमाश्च सन्ति। सूत्रनिर्माणयन्त्र.

शालाः पिष्टपेषणयन्त्रशाला वस्त्रनिर्माणयन्त्रशालाश्च सन्त्यत्र बह्वयः ।

' नगरेत्र ' चान्दनी चौक् ' नामकं चत्वरं, तत्रैव मध्ये घटिकायन्त्रस्तूपः, तस्यैव पार्श्वे ' विक्टोरिया गार्डन् ' नामकमुद्यानम्, तस्मिन्नेवोद्याने प्रदर्शिनीगृहम्, पुस्तकालयः, दुर्गस्य पश्चिमोत्तरतः ' जामा मस्जिद् ' नामकं प्रसिद्धतमं दर्शनीयतमंच देववन्दनगृहम्, इत्यादीनि दर्शनीयानि वस्तूनि ।

नगरात्पश्चिमतोऽर्धक्रोशदूरेऽशोकस्तम्भोऽस्ति, यत्र बहवश्शिलालेखा स्सन्ति । ' अजमेर दर्वाजा ' नामकात् द्वारात्पंचक्रोशदूरे ' कुतुबमीनार ' नामा ऽन्तस्सुषिर ष्षष्ट्यधिकशतहस्तोन्नतस्तम्भो वर्तते । उपर्यारोहणाय मध्यभागे सोपानपङ्क्तिश्चान्त र्वर्तते ।

नगरा द्दक्षिणतः क्रोशमात्रे पाण्डवानां राजधानी इन्द्रप्रस्थं नगरमस्ति । यद्यपि तत्र केवल मिदानीं दुर्गं एकश्शीर्यमाणोऽभिदृश्यते, अथापि तस्यैव नगरस्याभिज्ञानरूपोयमिति सन्तोषावह मेतत् ।

मौर्यवंश्येन दिल्लुनाम्ना राजपालेन नरपतिना इन्द्रप्रस्थस्य पार्श्वे किञ्चिन्नगरं निर्मितं स्वनाम्ना भूषितं चाभूत्, तदेवेदानीं दिल्लीशब्देन व्यवह्रियते । दिल्ली

नगरमेवेन्द्रप्रस्थनगरमिति कथयन्तश्च भ्राम्यन्ति । दिल्लीनगर मधिकृत्य लेखनीयं बह्वस्ति । विस्तारेण लिख्यमाने महान् कश्चित्प्रबन्धो लिखितस्स्यात्, अतश्चैतावतैव समापयामि लेखमिमम् ।

दिल्लीनगरेत्र बहूनां बाष्पशकटमार्गाणां सम्मेळनं भवति। तत्रैको बाम्बेबरोडामध्यभारतबाष्पशकटमार्गः, अन्यः पूर्वभारतबाष्पशकटमार्गःअपरश्च दिल्ली-अंबाला कालका बाष्पशकटमार्गः । इतोन्येपि केचन सन्ति बाष्पशकटमार्गाः ।

कुरुक्षेत्रात् ।

५–५–०५

थानेश्वरनामकात् बाष्पशकटावस्थितिस्थानात् ( Thanesar ) अर्धक्रोशदूरे पश्चिमतः कुरुक्षेत्रं नाम नगरं वरीवर्ति । वैदिकमतावलम्बिष्वपरिचित कुरुक्षेत्रनामधेयस्सुदुर्लभ एव स्यादिति नेयमतिशयोक्तिः ।

प्रविष्टमात्रस्यैव कुरुक्षेत्रं यादृशी मे चित्तवृत्तिस्समजनि तया नूनं प्रत्यक्षितमस्य क्षेत्रस्य बादरायणोक्तं धर्मक्षेत्रत्वम् । तपोयज्ञादिषु मनसः प्रशान्तभावः प्रधानसामग्रीति तं सम्पादयतोस्य क्षेत्रस्य का नाम विप्रतिपत्तिर्भवितुमर्हति धर्मक्षेत्रत्वे ।

क्षेत्रस्यास्य कुरुक्षेत्रसंज्ञाप्राप्तौ कारणमित्थमभि वर्णितं महाभारते शल्यपर्वान्तर्गते बलदेवतीर्थयात्रा पर्वणि—

" ऋषयः—

प्रजापतेरुत्तरवेदिरुच्यते
सनातनं रामसमन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो
वरेण सत्रेण महावरप्रदाः ॥
पुरा च राजर्षिवरेण धीमता
बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत्कुरुणा महात्मना
ततः कुरुक्षेत्रमितीह पप्रथे ॥

रामः—

१ किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥

ऋषयः—

पुरा किल कुरुं राम कर्षन्तं सततोत्थितम् ।
अभ्येत्य शक्रस्त्रिदिवात्पर्यपृच्छत कारणम् ॥

इन्द्रः—

किमिदं वर्तते राजन् प्रयत्नेन परेण च ।
राजर्षे किमभिप्रेत्य येनेयं कृष्यते क्षितिः ॥

कुरुरुवाच—

इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृतान् लोकान्पापाविवर्जितान् ॥

अवगम्य ततः शक्रो जगाम त्रिदिवं पुनः ।
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम् ॥
आगम्यागम्यचैवैनं भूयो भूयोऽवहस्यच ।
शतक्रतुरनिर्विण्णं पृष्ट्वा पृष्ट्वा जगाम ह ॥
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ।
ततश्शक्रोब्रवीद्देवान् राजर्षेर्यच्चिकीर्षितम् ॥
एतच्छ्रुत्वाब्रुवन्देवास्सहस्राक्षमिदं वचः ।
यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः ।
अस्मानिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ॥
आगम्य च ततश्शक्रस्तदा राजर्षिमब्रवीत् ।
अलं खेदेन भवतः क्रियतां वचनं मम ॥
मानवा ये निराहारा देहन्त्यक्ष्यन्त्यतन्द्रिताः ।
युधि वा निहतास्सम्यगपि तिर्यग्गता नृप ॥
ते स्वर्गभाजो राजेन्द्र भविष्यन्ति महामते ।
तथास्त्विति ततो राजा कुरुश्शक्रमुवाच ह ॥
ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रम्बलनिषूदनः ॥



मोहमय्यां विक्टोरिया टर्मिनस् नामकं अन्तिमं शकटाश्रयस्थानम् ।

'एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाभ्यनुज्ञातं ब्रह्माद्यैश्च सुरैस्तथा ॥'
—इति ।

कुरुक्षेत्रस्य माहात्म्यं तद्गतानां तीर्थानां प्रभाव इत्यादिकं महाभारते पुराणेषुच बहुषु बहुधा प्रपञ्चितं तत एवावगन्तव्यम् ।

कुरुक्षेत्रनगरस्योत्तरतोर्धक्रोशे प्रवहति सरस्वतीनदी सूक्ष्मरूपा । इयमेवोत्तरतस्सीमा कुरुक्षेत्रस्य । चतुर्षु दिक्षु सीमा महाभारत इत्थं वर्ण्यते—

" तरन्तुकारन्तुकयोर्यदन्तरं
रामह्रदानाञ्च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं
प्रजापतेरुत्तरवेदिरुच्यते ॥ ' इति ।

अत्र तरन्तुकारन्तुकशब्दौ यक्षनामधेयौ । एकस्तरन्तुको द्वावरन्तुकौ । कुरुक्षेत्रस्याग्नेय्यां वायु दिशायां चारन्तुकसंज्ञौ द्वौ यक्षौ स्तः। नैरृत्यांरामह्रदाः ऐशान्यान्तरन्तुको यक्षः । तरन्तुकादरन्तुकं, अरन्तुका द्रामह्रदांश्च यावत्किञ्चिन्न्यूनाधिकभावेन चत्वारिंश-त्क्रोशा भवन्ति ।

नगरस्याग्नेय्यां सन्निहतं नाम तीर्थमस्ति । सुघेष्टकचितसोपानपङ्क्ति--विराजितं कमलपूर्णं स्वच्छ स्वादुपानीयं सरोद्वयं परस्परसम्बद्धं सन्निहत शब्देन व्यवह्रियते ।

दक्षिणभागे कुरुतीर्थमस्ति । तस्य पार्श्वत्रये सुघेष्ट कचितास्सोपान पङ्क्तयस्सन्ति । प्रदक्षिणं कुर्वताच तीर्थ मिदमेकक्रोशमिता ततोधिका वाभूमिः परिक्रान्ता स्यात् । तीर्थानि चान्यानि सुबहूनि सन्त्यपि विस्तर भयान्न लिख्यन्ते ।

नगरस्य निर्ऋतिभागे क्रोशमात्रे बाणगङ्गानामकं तीर्थमास्ते । शरतल्पे शयानस्य ज्ञानवृद्धस्य कुरुपिता महस्य भीष्मस्य तृषाशान्तये गोमयं पयस्समावाहय ता धन्विना धनञ्जयेन पर्जन्यास्त्रेणाहतायनो भूभागा द्वारिधारा समुत्पन्ना, सएवायं भूभागः । स्यानेत्र सरः किञ्चिचतुरश्रमगाधजलपूरितमास्ते ।

एतत्तीर्थस्योत्तरतः क्रोशमात्रे कुरुक्षेत्रनगरा त्पश्चिमतः क्रोशमात्रे भीष्मशय्यानामकं तीर्थम्, यत्र शरतल्पे शयानो महात्मा भीष्मो राजधर्मान् मोक्ष धर्मान् दानधर्मानन्यांश्च नानाविधान् धर्मान्युधिष्ठि रायोपाविशत्तदेवेदं स्थानम् ।

नगरस्य पश्चिमतस्सार्धक्रोशद्वये गीतोपदेशस्थानमस्ति, यत्र भगवान्वासुदेवो धनञ्जयं निमित्तीकृत्य सर्ववेदसारार्थान् जगौ, यत्र चार्जुनाय विश्वरूपं प्रादर्शयत्तदिदं स्थानम् । स्थानेऽत्र काचन चतुरश्रा वेदिका वरीवर्ति, तन्मध्ये च वटः कश्चित् ।

कुरुक्षेत्रस्य मनोहरता नानया क्षुद्रया लेखिन्या वर्षशतेनापि मादृशैः परश्शतैरपि वा पुरुषैर्वर्णयितुं शक्यते । सर्वथा चानुभवैकवेद्यास्य मुग्धता । एकदा क्षेत्रमिदमागतस्य मनस्विनो न कदाप्येतस्मात् क्षेत्रान्निर्जिगमिषोदियान्मनसीति ममान्तरोऽभिप्रायः ।

दिल्ली— अम्बाला-कालका वाष्पशकटमार्गे दिल्ली नगरात् ९१ अर्धक्रोशदूरे थानेश्वरनामकं वाष्पशकटावस्थितिस्थानमस्ति । दिल्लीनगरात् थानेश्वर पर्यन्ते वाष्पशकटमार्गेऽवस्थितानि वाष्पशकटाश्रय स्थानानि प्रधानानि ।

| कलिकातानगरात् अर्धक्रोशाः | वाष्पशकटाश्रय स्थानानि |
|---|---|
| ९५५ | दिल्ली |
| ९८१ | सोनपत् |
| १००९ | पानीपत् |
| १०२० | करनाल् |
| १०५१ | थानेश्वर |

## हरिद्वारात् ।

कुरुक्षेत्रस्य ' थानेसर ' ( Thanesar ) नाम के बाष्पशकटावस्थितिस्थाने ५-५-०५ दिने रात्रा वट्घण्टा वादनसमये बाष्पशकटानुबन्धमारूढोहं ' अंबाला ' नामकं ( Umballa ) वाष्पशकटावस्थितिस्थानं प्राप्य शकटानुबन्धादवातरम् । इदञ्च स्थानं दिल्ली-अंबाला-कालका बाष्पशकटमार्गस्य ( Delhi Umbala Kalka Railway ) उत्तरपश्चिमबाष्पशकटमार्गस्य ( North Westren Railway ) च सङ्गमस्थानम् । अम्बालास्थानात् रात्रौ एकघण्टावादनसमये निर्गतश्च सहरन्पुर ( Saharanpur ) नामकं बाष्पशकटावस्थिति स्थानं २-३१ घण्टावादनकाले प्रापम् । इदञ्च उत्तर पश्चिम बाष्पशकटमार्गस्य ( North Westren Railway ) अवधरोहिलखण्ड बाष्पशकटमार्गस्य ( Oudh and Rohilkhand Railway ) च सङ्गमस्थानम् ।

सहन्पुरस्थानाद्रात्रौ २-५० घण्टावादन समये निर्गतश्च प्रत्यूषे ४-३२ घण्टावादनसमये 'लक्सर' (Laksar ) नामकं बाष्पशकटावस्थितिस्थानमापम्। इदञ्च ' अवधरोहिलखण्ड बाष्पशकटप्रधानमार्गस्य,

तत्रत्यतया देहरादूनशाखामार्गस्य ( Dohradun Branch ) च सङ्गमस्थानम् ।

लक्सरनाम्नो वाष्पशकटावस्थितिस्थानात् प्रातः ५-२० घण्टावादनकाले प्रस्थितोऽहं ७-२० घण्टाकाले हरिद्वारं प्रापम् ।

थानेश्वरादम्बालानगरं यावत् २६ अर्धक्रोशाः, अम्बालातस्सहरन्पुरं यावत् ६१ अर्धक्रोशाः, सहरन्पुरात् लक्सरं यावत् ३३ अर्धक्रोशाः, लक्सरात् हरिद्वारं यावत् ६ अर्धक्रोशाश्च वर्तन्ते ।

हरिद्वार नामकं क्षेत्रं सिवालिक् नामक हिमाचल श्रेण्याः पाददेशे गङ्गाया दक्षिणे तीरे वर्तते । हरिद्वारमेव गङ्गाद्वारमित्यपि व्यपदिश्यते कपिलस्थलमित्युपनामादिभिरप्यपलक्ष्यते । इतएवारभ्य गङ्गा समतलभूभागे प्रवहति । हरिद्वारस्य जनसंख्यापरिमाणकं पाषाम-गोपत्रम् ।

हरिद्वारमिति संज्ञान्तरस्य हेतुः नगरागमनाश्रम द्वारस्वरूपमेवेति केचित्, भगवच्छ्रीहरिद्वारत्वाभिप्रायेण वर्णयन्ति । अत्र गङ्गायां ब्रह्मकुण्डनामकस्थान विशेषावच्छेदेन स्नानं महापुण्यावहमिति स्मर्यते । अत्रैव ब्रह्मकुण्डं सर्वेशुक्लाम्बरधरमहानारायणविग्रहि-

भारान्वहन्तः परस्सहस्रं जना नानादेशेभ्यः प्रति दिनमायान्ति । अत्रास्थिप्रक्षेपेण पितरस्स्वर्गं यान्तीति ते मन्यन्ते । उद्घोषयन्ति चैवं पुराणानि । सगरसुत वृत्तान्तश्चात्र प्रमाणम् ।

हरिद्वारे सुदूरं गङ्गाया दक्षिणे तीरे सोपानपङ्क्ति रुपलमयी विराजते । तामेवानु पङ्क्तिं बहवो देवालया गृहाश्चाभ्रंलिहास्सन्ति । धन्यास्ते येत्र वसन्तो भगव च्चरणाम्बुजनिष्यन्दिनीं भगवतीं भागीरथीं सततमवलो कयन्तस्तस्या एव पानीय—मुपयुञ्जानास्तत्तरङ्ग सङ्गतेन शीतेन वातेनाप्यायिताः कालं यापयन्ति।

हरिद्वारस्य दक्षिणतोऽर्धक्रोशदूरे मायापुरी शोचनीयायामवस्थायामास्ते। प्रायोऽत्रत्यास्सर्वेपि गृहा जीर्णाः पतिताः पतन्तः पतनोन्मुखाश्च दृश्यन्ते । इयमेव सा माया, या खलु ' अयोध्यामथुरामाया काशी काञ्चीह्यवन्तिका ' इति सप्तसु मोक्षप्रदासु पुरीषु परिगण्यते ।

हरिद्वारस्य दक्षिणतः ३अर्धक्रोशदूरे कनखलं नाम क्षेत्रमास्ते । कोनु खलोत्र गङ्गायां न स्नायात् ' इत्यभि प्रायकशब्दराशिगतस्य कोनुखल इति पदद्वयस्यापभ्रंशः कनखलमितीत्यवगम्यते । हरिद्वारे कुशावर्ते कन खलेच गङ्गास्नानस्य महत्पुण्यफलमनुवर्ण्यते ।

हरिद्वारस्य दक्षिणतोऽर्धक्रोशदूरे गङ्गायाः प्रधान प्रवाहात्पृथग्भवति कुल्या काचिन्महती । अस्या एव कुल्यायाः प्रभावेन बहुसहस्रसंख्यानि क्षेत्राणि फलन्ति सस्यम् ।

अत्र क्षेत्रे कनखले च प्रायसर्वेपि ब्राह्मणाः पौरोहित्यवृत्त्या जीवन्तो निवसन्ति । अत्यावश्यक कश्च सर्वे पदार्था अत्रत्येष्वापणेषु लभ्यन्ते । पुरोहित ब्राह्मणा एते भृतिं गृहीत्वा स्वस्वगृहेषु स्थानं ददति यात्रि जनानां निवासाय । कलकत्तावासिना रायबहादुर उपाधिधारिणा सूर्यमल्लश्रेष्ठिना निर्मिता काचन महती धर्मशालाप्यत्रास्ते ।

हृषीकेशक्षेत्रात् ।

१०—५—०५

पूर्वेद्युरात्रौ ( ९—५—०५ ) अर्धनिशातः परं ३ घण्टाकाले हरिद्वाराभिर्गतोहमद्य प्रातर्दशघण्टावादन समयेऽत्रागतोऽभवम् । बाष्पशकटमार्गो हरिद्वार एव समाप्नोति । यद्यपि हरिद्वाराद्धृषीकेशपर्यन्तं प्राय स्समतला भूमिरिति बलीवर्दशकटानां तुरगशकटानांच

गतागतं प्रचलति, अथापि सर्वे वयमद्दभ्रसादस्तु चराश्चेति पद्भिरेवागच्छाम ।

हरिद्वारादुत्तरपूर्वभागे चतुर्दशार्धक्रोशादूरे (14 miles) हृषीकेश क्षेत्रमिदमस्ति । मार्गेच हरिद्वारान् सार्धक्रोशदूरे काचन धर्मशाला, ६ अर्धक्रोशदूरे 'रावल' ग्रामः, क्रोशचतुष्टयदूरे सत्यनारायण मन्दिरं च वर्तन्ते । सत्यनारायणमन्दिरे च सेठ् रामनारायण—रामलाल् नाम्नो द्रव्यसाहाय्येन यात्रिभ्यः पकापक्वान्नवितरणं भवति । मध्येमार्गं बह्व्यश्च नद्यः कुल्याश्च सन्ति । नानाविधवृक्षमण्डिता चोभयतोमार्गं भूमिः ।

गङ्गाया दक्षिणे तीरे हृषीकेशक्षेत्रमिदं वरीवर्ति । इदमेव कुब्जाम्रकमित्यप्युच्यते । भगवतो दर्शनकाम नया तपः कृतवते रैभ्याय मुनये तदाश्रमसमीपस्थ माम्रवृक्षमुपाश्रितो भगवानात्मानमदर्शयत् । यतो भगवद्भारामदिष्णुराम्रः कुब्जो बभूव ततोऽस्य क्षेत्रस्य कुब्जाम्रकमिति नाम संजातं । रैभ्येन मुनिना प्रार्थितश्च भगवांस्तत्र सन्निधानं प्रतिजानातिस्म । यतो हृषीकानि जित्वा त्वयात्र हृषीकेशोऽहं तपसा ।

थितः ततोऽत्र हृषीकेशसंज्ञयैव वत्स्यामि, क्षेत्रञ्चेदं हृषीकेशसंज्ञं भविष्यती ' ति भगवतो वरदानेन हृषीकेशक्षेत्रमिति संज्ञास्य बभूव ।

क्षेत्रेऽत्र बह्व्यो धर्मशाला बहवो देवालयास्सन्ति। तत्र हृषीकेशस्यालयः पुरातन इति कथ्यते । चतुर्भुज श्शङ्खचक्रगदापद्मधारी भगवान् शिलारूपधारी विराजते । नवमे ख्रिस्तशतके शङ्कराचार्यस्थापितः प्रतिबिम्बितश्चार्यामिति कथयन्ति जनाः । आलयस्वरूप दर्शनेतु तावत्प्राचीनतास्य न हृदयमवतरति । अयमेवालयो भरतमन्दिरमित्युच्यते ।

हृषीकेशक्षेत्राद्बदरिकाश्रमस्य मार्गः सङ्कीर्ण स्संजायते, शकटस्य गमनं तत्र न भवति । प्रायो भक्ता जनाः पद्भ्यामेव यात्रां कुर्वन्ति । अशक्तानाञ्च त्रिविधानि नरवाहनान्यत्रोपलभ्यन्ते। तानिच ' झम्पान् ' ' दरीदण्डी ' ' कण्डी ' इति संज्ञायन्ते । तत्र ' झम्पान ' नामकश्चतुर्भिः पुरुषैः , ' दरीदण्डी ' नामकं द्वाभ्यां, ' कण्डी ' नामकमेकेन चोह्यते । तेषाञ्च रूपाणि रेखयाऽधः प्रदर्श्यन्ते ।

द्वितीयस्यायमाकारः




इदञ्च वेणुपत्रनिर्मितम्भवति। द्विविधमपीदमेकेन पुरुषेण पृष्ठेनोह्यते।

एतेषां वाहनानां हरिद्वाराद्बदरिकाश्रमं गत्वा पुनरवतीर्य मेहल् चोरी नामकस्थानपर्यन्तं प्रापणाय भृतिः झम्पानस्याशीतिरूप्याणि, दरीदण्डी नामकस्य पञ्चाशदन्यूनानि रूप्याणि, कण्डी नामकस्य पञ्चविंशति रूप्याणि। भृतेर्न्यूनाधिकभावश्च समयानुगुण्येन भवति।

देवप्रयागात्।

२५-५-०५

हृषीकेशान्निर्गतस्यार्धक्रोशदूरे शत्रुघ्नस्य मन्दिरं दृष्टिपथमुपयाति। शत्रुघ्नमन्दिरात्क्रोशमात्रे लक्ष्मणस्य

द्वितीयस्यायमाकारः




इदञ्च वेणुपत्रनिर्मितम्भवति । द्विविधमपीदमेकेन पुरुषेण पृष्ठेनोह्यते ।

एतेषां वाहनाना हरिद्वाराद्बदरिकाश्रमं गत्वा पुनरवतीर्य मेहल् चोरी नामकस्थानपर्यन्तं प्रापणाय भृतिः झम्पानस्याशीतिरूप्याणि, दरीदण्डी नामकस्य पञ्चाशदन्यूनानि रूप्याणि, कण्डी नामकस्य पञ्चविंशति रूप्याणि । भृतेर्न्यूनाधिकभावश्च समयानुगुण्येन भवति ।

देवप्रयागात् ।

२५–५–०५

हृषीकेशान्निर्गतस्यार्धक्रोशदूरे शत्रुघ्नस्य मन्दिरं दृष्टिपथमुपयाति । शत्रुघ्नमन्दिरात्क्रोशमात्रे लक्ष्मणस्य

मन्दिरं च । मध्ये च कस्यचित्पर्वतस्यारोहावरोहौ भवतः । लक्ष्मणमन्दिरस्य पार्श्वतः पञ्चषा आपणा स्सन्ति । विंशतिहस्तदूर एव गङ्गा प्रवहति । गङ्गाया उपरि अयोरज्जुद्वये लम्बमानो दोलासेतुः कश्चिदस्ति । सेतोश्चाकारोधश्चित्रितो वर्तते।




विवरणम्—

१— सुधोपलखण्डमयं स्तूपद्वयम् ।

२— एकीकृतानां पञ्चषाणामयस्सूत्राणां समूहरूपमयोरज्जुद्वयम् ।

३— ताटशमेवायोरज्जुद्वयं सेत्वधोभागस्थम् ।

लेखनावगम्यते । अयमेव सेतुर्लक्ष्मणझूले यत्रत्ये
ऽर्थवद्धियते । एतन्निर्माणात्पूर्वं शणरज्जुमयस्सेतु
रासीत् । यादृश्यस्मदेशे रथेषु रज्जुरुपयुज्यते, ताव
त्परिमाणं शणरज्जुद्वयमधोभागे एकहस्तान्तरेण
समानरेखायां बद्ध्वा तत्र काष्ठदण्डास्तिर्यगास्तीर्य
सूत्रैर्बद्ध्यन्ते । उपरि च तादृश्येवैका रज्जुर्यावति
दूरे स्थिता पुरुषहस्तावलम्बनयोग्या भवेत्तावत्पूर्ध्व
भागे बद्ध्यते । उपरितनां रज्जुमवलम्बमानेनाध-
स्थेषु काष्ठदण्डेषु पादौ निक्षिपता गन्तव्यं पुरुषेण ।

दक्षिणामुखं प्रवहन्त्या गङ्गायाः परे पारे काचन
धर्मशालास्ते । एतावत्पर्यन्तं गङ्गाया दक्षिणेन तीरेण
मार्गः । सेतूत्तरणानन्तरं तु वामेन याति तीरेण ।

' फुल्वाडी चट्टी । '

गङ्गामेतोर्लक्ष्मणझूलानाम्नः क्रोशद्वयदूरे " फु-
ल्वाडी चट्टी " नामकं स्थानमस्ति । अत्र देशे पञ्चष
कुटीरात्मकं यात्रिजननिवासयोग्यं पर्वतप्रदेशेषु
वर्तमानं स्थानं " चट्टी " ति व्यवह्रियते । इतः
परं तथैवाहमपि लेखिष्यामि । फुल्वाडी चट्ट्यां
पञ्चषास्तृणाच्छन्नाः कुट्यो द्वित्राआपणास्सन्ति ।
गङ्गाच प्रवहति समीपे ।

लक्ष्मणझूलात् परं गङ्गाया दक्षिणे तीरे टिहरी
राजशासनान्तर्गतो देशः, वामतीरे चक्रवर्तिनश्शास

४—तदेवरज्जुद्वयमधोमुखं गमितं भूम्यन्तर्दृढतया बद्धम् ।

५—सेतोस्समानरेखास्थो मार्गः ।

नद्यास्तीरद्वये सुधोपलखण्डमयं स्तूपद्वयं निर्मित मास्ते । स्तूपयोरग्रभागात्किंचिदधोरन्ध्रद्वये २अङ्कचिन्हितमयोरज्जुद्वयमेकैकस्मिन्पार्श्वे एकैकक्रमेण प्रोतं स्तूपाद्बहिरानीय वक्रगत्या भूमेरन्तर्नीतं तत्रैव दृढबद्ध मुपरिखण्डशिलाभिर्निहिताभिरवष्टब्धंचास्ते । स्तूप योरधोभागेप्ययोरज्जुद्वयं ( ३ ) तृतीयाङ्कचिह्नित मुपरिस्थितयो रज्ज्वोस्समानरेखायामुभयोः पार्श्वयो र्बद्धं वर्तते । तयोरज्ज्वोरुपरि चतुरश्रीकृतानि काष्ठानि दृढमवस्थापितान्युपरिस्थितयो रज्ज्वोस्संयोजिताभि रयश्शलाकाभिस्संयोजितानि सन्ति। इत्यमुपरि स्थितयो रज्ज्वोरयश्शलाकाद्वारेणलम्बमान योरज्ज्वोरुपरिस्थापि तेषु दीर्घेषु काष्ठेषुतिर्यक्काष्ठफलकानिनिहितानि सन्ति। काष्ठ फलकोपरि खण्डोपलमृत्तिके समास्तृते स्तः । सेतो भारस्सर्वोप्युपरिस्थितयो रज्ज्वोरेव निहितो वर्तते। सेतोर्दैर्घ्यं किञ्चिन्न्यूनाधिकभावेनाष्टपञ्चाधिकशत हस्तपरिमितं वैशाल्यं च हस्तद्वयरूपं दृश्यते ।

सेतुरयं कल्कत्तावासिना सूर्यमलश्रेष्ठिना३२००० रूप्यव्ययेन निर्मितः । अयमर्थस्स्तूपनिहितेन शिला

लंघनानगम्यते । अयमेव सेतुर्लक्ष्मणमूले सत्रत्यै र्व्यवह्रियते । एतन्निर्माणात्पूर्वं शणरज्जुमयस्सेतु रासीत् । यादृश्यस्सदेशे रथेषु रज्जुरुपयुज्यते, ताव त्परिमाणं शणरज्जुद्वयमधोभागे एकहस्तान्तरेण समानरेखायां बद्ध्वा तत्र काष्ठदण्डास्तिर्यगास्तीर्य सूत्रैर्बद्ध्यन्ते । उपरि च तादृश्यैवैका रज्जुर्यावति दूरे स्थिता पुरुषहस्तावलम्बनयोग्या भवेत्तावत्यूर्ध्व भागे बद्ध्यते । उपरितनां रज्जुमवलम्बमानेनाध- स्थेषु काष्ठदण्डेषु पादौ निक्षिपता गन्तव्यं पुरुषेण ।

दक्षिणामुखं प्रवहन्त्या गङ्गायाः परे पारे काचन धर्मशालास्ते । एतावत्पर्यन्तं गङ्गाया दक्षिणेन तीरेण मार्गः । सेतूत्तरणानन्तरं तु वामेन याति तीरेण ।

" फुल्वाडी चट्टी । "

गङ्गासेतोर्लक्ष्मणमूलानाम्नः क्रोशद्वयदूरे " फु- ल्वाडी चट्टी " नामकं स्थानमस्ति । अत्र देशे पथ्यप कुटीरात्मकं यात्रिजननिवासयोग्यं पर्वतप्रदेशेषु वर्तमानं स्थानं " चट्टी " ति व्यवह्रियते । इतः परं तथैवाहमपि व्यवहरिष्यामि । फुल्वाडी चट्यां पथ्यपान्नृणाच्छन्नाः कुट्यो द्वित्राश्चापणास्सन्ति । गङ्गाच प्रवहति समीपे ।

लक्ष्मणमूलात परं गङ्गाया दक्षिणे तीरे टिहरी राजधानान्तर्गतो देशः, वामतीरे ब्रिटिशसर्वदेशाम

न्तर्गतो देश इति व्यवस्था । गङ्गाया वामे तीरे चतुर्हस्तान्यूनविस्तारो मार्गस्त्रिशिलाखण्डमृत्तिकाभ्या-मास्तृतो घट्टितश्चास्ते । मार्गस्यैकस्मिन् पार्श्वेऽधोधः प्रवहति गङ्गा नदी, अपरस्मिंश्च पार्श्वे गगनभेदी पर्वत स्तिष्ठति । मार्गश्च पर्वतस्य नितम्बदेशे याति । निम्नोन्नतेषु स्थलेषु निर्मितोयं मार्ग इत्यारोहणमव रोहणं च सर्वत्र कर्त्तव्यं भवति । गच्छन्नेव यदि कश्चित्पुरुषोऽधः प्रवहन्तीं गङ्गां पश्येन्नूनमसौ घूर्णितशिराः पतेदधः । मार्गादधो गङ्गाप्रवाहाव लोकने भयमिवोपजायते । लक्ष्मणझूलात आरभ्य मार्गेऽर्धक्रोश सूचकाः प्रस्तरखण्डा निखातास्सन्ति ।

लक्ष्मणझूलातः १॥ अर्धक्रोशदूरे कश्चिज्जल प्रपातः, २॥ अर्धक्रोशदूरे च कश्चिदन्यो जलप्रपातः, तत्रैव जलवेगेन चाल्यमानो घरट्टः कश्चिच्चास्ते ।

" गूलर् चट्टी । "

फुलवाडीचट्टीतो नातिदूर एव गङ्गा मार्गाद्दूरी भवति । ततः परं ' हि-ठल ' नाम्न्या नद्या वामेन तीरेण याति मार्गः । कस्यचित्पर्वतस्यारोहणावरोह णानन्तरं सुदूरे गूलर्चट्टी वर्तते । इयञ्च हरिद्वारात् २.३॥ अर्धक्रोशदूरे फुल्वाडी चट्टीतः ३। अर्धक्रोशदूरे

पावनिष्ठते। अत्र च द्वित्रा आपगाः पद्यया: कुट्यश्च सन्ति । 'हिउल' नदी च प्रवहति समीपे ।

हर्षिकेशात् ११–५–०५ दिने प्रातः पञ्चघण्टा वादनसमये निर्गतोऽहं रात्रौ सप्तघण्टावादनसमये गूलरचट्टीं प्रापम् । मध्ये लक्ष्मणझूलामविश्रम्य घने शालाया मध्याह्नाशयनं कृतम् ।

"बिजनी चट्टी ।"

गूलरचट्टीतः १२–५–०५ दिने प्रातः पञ्च-घण्टावादनसमये निर्गतोहं 'हिउल' नदीं काष्ठ सत्रमेनुत्तीर्य कस्यचित्पर्वतस्य नितम्बभागस्थ २५॥ अर्धक्रोशदूरे मोहनचट्टीं पश्यन् , ततो गत्वा परि श्रमेणारोहणीयं पर्वतस्य कस्यचिन्मध्यभागनाकस्थ बिजनीचट्टीमष्टघण्टावादनसमये प्रापम् । इयञ्च हरिद्वारात् २८॥ अर्धक्रोशदूरे कुण्डयादीचट्टीतः ८ अर्धक्रोशदूरे चास्ते । अत्र पद्यया: कुट्यो द्वित्रा आपगाः कश्चिदल्पीयान गिरिनिर्झरश्चैवास्ति । इयं चट्टी पर्वतारोहणेन परिश्रान्ताना विश्रमस्थानी भवन्ती महदुपकरोति । "बिजन्यारोहण" मितीद मारोहणं प्रसिद्धम् । अन्यस्य पर्वतस्यारोहणं सुकरम्, अस्यस्य तु कष्टमाप्यमितीदमारोहणं कठिनतमम् । चट्यामत्रान्यन्नावश्यकाः पदार्था लभ्यन्ते । अद्यीवि

तोलकात्मकैकसेरभारस्य तण्डुलस्य कलाचतुष्टयम् तावत एव गोधूमपिष्टस्य सार्धकलाद्वयम्, तावतो घृतस्यैक रूप्य च मूल्यम्। लवणतिन्त्रिणीफलमरीचादिकमत्र नोपलभ्यते। सर्वं च वेशवारादिकं यात्रिभिस्सहैव नेय भवति। शाकस्तु नोपलभ्यते विना ऽऽलुकमेकम्।

'बन्दर चट्टी।'

विजनीचट्ट्या माध्याह्निक भगवदाराधन निर्वर्त्य घण्टाद्वयवादनसमये ततो निरगाम्। उपर्युपरि सुदूर मारुह्य पर्वतस्य शिखर च प्रापम्। अय पर्वतो गङ्गायाः 'हिउल' नद्याश्च मध्यवर्तीति तच्छिखर गतस्यैकतो गङ्गान्यतो हिउल नदी चाधोधः प्रवहन्त्यौ कुल्ये इव समदृश्येताम्। ततः कियद्दूर गत्वा मार्गादधो वर्तमाना गिरिनिर्झरेण शीतजल वाहिना केनचिद्यात्रिणामभीप्सनीया 'कुण्डचट्टी' विजनीतः २॥ अर्धक्रोशदूरे, ४॥ अर्धक्रोशदूरे पर्वतस्याधो नन्दग्राम च पश्यन् सार्धषड्घण्टावादन समये गङ्गायास्तीरे वर्तमाना यट्टभि कुटीरैरापणैश्च युता बन्दरचट्टीमभजम्। कुटीरे च कुत्रचिद्भगवतो नैशमाराधनमकरवम्। इय च हरिद्वारात् ३४। अर्धक्रोशदूरे वर्तते। कुण्डचट्टीव एतावत्पर्यन्त मष्ट साध्य पर्वतावरोहण कर्तव्य भवति।

## कण्डी चट्टी।

चन्दरचट्टीतः १३–५–०५ दिने प्रातः पञ्च घण्टावादनसमये निर्गतो महत् किञ्चन पर्वतशिखर मारुह्यावतीर्णो महादेवचट्टीं चन्दरचट्टीतः ३। अर्ध क्रोशदूरे गङ्गायास्तीरे वर्तमानामुपदशैरापणैः कुटीरैश्च युक्तामतिक्रम्य, ततः ४ अर्धक्रोशदूरे वर्त मानायां रामचट्टयां (सिम्लाचट्टीत्यपीय मुच्यते) माध्याह्निकाराधनं भगवतो निर्वर्त्य, ततोऽपि ३घण्टा वादनसमये निर्गतस्सायं पञ्चघण्टावादनसमये "कण्टी चटटी" प्रापम्—यत्र पञ्चषाः कुटय आपणाश्च सन्ति, यस्याश्च नातिदूरे कण्डिग्रामो वर्तते, या च हरिद्वारात् ४४ अर्धक्रोशदूरे वर्तते, यस्यां च द्वित्रा जलप्रपाताः कदल्याम्राद्याश्च फलवृक्षास्सन्ति। भगवतो रात्र्याराधनं च निरवर्तयं तत्रैव।

## व्यास चट्टी।

कण्डीचट्टीतः १४–५–०५ दिने प्रातः पञ्च घण्टावादनसमये निर्गतो महान्तं कंचन पर्वतमारुह्या वतीर्णः ४ अर्धक्रोशदूरे व्यासगङ्गानाम्नीं नदीं लक्ष्मण झूलासमानाकारेण सेतुनातिक्रम्य व्यासचट्टीं ४॥ अर्धक्रोशदूरे वर्तमानामुपदशैः कुटीरैरापणैश्च युक्ता मगमम्। इदमेव स्थानं व्यासस्य भगवत स्तपश्चरण

स्थलमिति वदन्ति । अत्र कस्मिंश्चिदालये व्यासस्य शुकस्य च प्रतिमे स्तः । व्यासगङ्गासेतोस्समीपे कश्चन मार्गो दक्षिणतो "नजीमाबाद्" नगर यावद्गच्छति । व्यासचट्टीमप्यतिक्रम्य ततः २॥ अर्धक्रोशदूरे वर्तमानां 'छाल्डी' चट्टीं प्रापम् । पञ्चपर्णकुटीरयुक्तायां तत्र माध्याह्निक भगवदाराधन निर्वर्त्य व्यासचट्टीतः ५ अर्धक्रोशदूरे वर्तमानां अमरकोटिचट्टी (उमरासूचट्टी) अतिक्रम्य ७-अर्ध क्रोशदूरे वर्तमानायां अनन्तरामपुरोहितस्य धर्म शालायां रात्रिमयापयम् ।

१५-५-०५ दिने प्रातः पञ्चघण्टावादनसमये ततो निर्गतश्च ६॥ सार्धषड्घण्टावादनसमये क्रोश मात्रे वर्तमान हरिद्वारात् ५७॥ अर्धक्रोशदूरस्थ देव प्रयाग प्रापम् ।

देवप्रयागे चोत्तरतस्समायान्त्या भागीरथ्याः पूर्वोत्तरतस्समायान्त्या अलकनन्दायाश्च सङ्गमो भवति । अलकनन्दाया दक्षिणे तीरे देवप्रयागग्रामो वर्तते । वामेऽपि केचन गृहा आपणाश्च यद्यपि सन्ति, परं प्रधानभागो ग्रामस्य दक्षिणे तीर एव । वाम तीराद्दक्षिणतीरगमनायाऽलकनन्दाया उपरि लक्ष्मण झूलातुल्यः कश्चिदयःकाष्ठमयो दोलासेतुरस्ति । स च

किञ्चिन्न्यूनाधिकभावेन १८० हस्तदीर्घः । अळक नन्दाया वामभागे चक्रवर्तिनो राज्यं दक्षिणभागे टिहरीनरेशस्य राज्यम् ।

देवप्रयागः ।

ग्रामात्पश्चिमतो नद्यास्सङ्गमस्थाने सोपानपङ्क्ति र्नद्यवतरणाय वर्तते । भागीरथी महता वेगेनात्र भीमं प्रवहति, अळकनन्दा च शान्ता । सङ्गमस्थाना दुपरि शतसोपानारोहणीये स्थाने भगवतो रामचन्द्रस्या लयोऽस्ति । आलयमध्ये नीलाम्बुदसवर्णो रघुनाथो मध्यभागे, तस्य वामे जानकी दक्षिणतो लक्ष्मणश्च विराजन्ते । श्रीमता शङ्कराचार्येणाऽऽलयेऽत्र भगवा न्प्रतिष्ठापित इति वदन्ति ।

भागीरथ्या स्तीरेणैवः कश्चिन्मार्गो गङ्गोत्पत्ति स्थानं प्रति याति । देवप्रयागात् १२० अर्धक्रोशादूरे गङ्गोत्पत्तिस्थानमुत्तरतो वर्तते । मध्येमार्गे टिहरी राजधान्यास्ते । देवशर्मनाम्नात्र पूर्वं महत्तपोऽनुष्ठित मिति देवप्रयाग इति संज्ञास्य समजायतेति पुराणम् ।

देवप्रयागात् १५-५-०५ दिने (२) घण्टाकाले निर्गतोऽहं क्रमेण ॥ अर्धक्रोशो क्वचिन्निर्झरमल्पम्, १॥ तमे महान्तं कंचन निर्झरम्, २॥ तमे गोविन्दकोठी नामकं स्थानम्, ३॥ येऽळकनन्दाया दक्षिणे तीरे ग्रामद्वयम्, ४॥ के निर्झरमेकंच पश्यन् ७॥ तमे

ऽर्धक्रोशे राणीबाग् चट्टीं हरिद्वारात् ६५ तमे ऽर्धक्रोशे वर्तमानां सायं ६॥ घण्टाकालेऽभजम् । चट्टया स्समीपे ' चीड ' इति व्यवह्रियमाणा अत्युन्नता महान्तो बहवो वृक्षास्सन्ति । केरोसिन् तैलं यज्जातीयफलकनिर्मितासु पेटिकासु द्वीपान्तरा- दायाति, तज्जातीया इमे वृक्षाः । द्राविडदेशे जाजी फलवृक्षा इतीमे व्यवह्रियन्ते । गृहादिनिर्माणेष्विम एव वृक्षा उपयुज्यन्ते ।

चट्टया अस्या स्समीपे प्रवहत्यळकनन्दा । नि- र्झरश्च कश्चिन्नातिदूरेस्ति । पञ्चषाः कुट्टय एकश्चापण स्सन्त्यत्र । चट्टया मत्र रात्रि मयापयम् ।

१६—५—०५ दिने प्रातः पंचघण्टाकाले राणीबाग् चट्टीतः प्रस्थितोहं ६८ तमेर्धक्रोशे रामपुर चट्टीं प्रापम् । अत्रैक एवापणः, तृणाच्छन्ना चैका कुटी स्तः । साच नवीना सम्यक्तृणैरनाच्छन्ना चेति वर्षात्त्राणे न प्रभवति । बहवो जना भीमं गर्जद्भि र्घनैराच्छन्नं गगनं पश्यन्त स्तत्रैव समभिळन् । सम्मिळितेषु बहुषु जनेषु भीपयति च मेघमण्डले पदमपि निधातुमलभ्यमाने स्थाने विस्तार्य तिर स्कारिणीं पक्तुमशक्नुवाना वयं महान्तं कष्टमन्व भूम । कथं कथंचन धैर्यमवष्टभ्य कुत्रचिदन्य

अत्र एव प्रदेशे वस्त्रे रावरणं सम्पाद्य तत्रैवाराधनं भगवतो निर्वत्य, ३ घण्टाकाले ततः प्रस्थान मकरवाम ।

भगवानचट्टीतो निर्गतश्च ७३तमेर्धक्रोशे 'बिल्व केदार' नामक स्थानं प्रापम् । पाशुपतमस्त्रं तपस्तो पिताच्छङ्करात् गृहीतुकामेर्जुने घोर तपः कुर्वति तत्परीक्षणाय भिल्लवेषधारी महादेवो यत्राविरभूत्, यत्रच तयोर्युद्धमभवत्तदेवेद स्थानम् ।

ततोऽपि प्रस्थितोह महता प्रवाहेण नामशेषी कृत पुरातन श्रीनगरं तत्र तत्र पतितैः खण्डोपलैरनु मेयं पश्यन् साय ६ घण्टाकाले हरिद्वारात् ७६ तमे ऽर्धक्रोशे वर्तमानं श्रीनगर प्रापम् ।

श्रीनगरात् ।

श्रीनगरमिद हरिद्वारात् ७६ अर्धक्रोशदूरे वर्तते । अलकनन्दाया वामे तीरे उन्नतमे स्थाने नगरमिद नवीनतया निर्मितमास्ते । पुरातन नगरन्तु किंचिद धोभागे स्थित १८९४ तमे खिस्ताब्दे महता पूरेणा ऽलकनन्दाया विनाशितमभूत् । ततः परमिदानीन्तन मिद नगर निर्मितम् । नगरस्य सन्निवेशो रमणीयः । विशालतमाया रथ्याया उभयोः पार्श्वयोः प्रायः खण्ड द्वयात्मका गृहाश्शोभन्ते नितराम् । छायावृक्षाश्च

रथ्याया उभयतोऽपि विराजन्ते । मध्येनगरं जलयन्त्र धारा कार्चिदास्ते । राजकीय पत्रप्रस्थापनशाला ( Post Office ) नगररक्षणसैनिकशाला ( Police Station ) वैद्यशाला चात्र सन्ति आवश्यकाश्च सर्वे पदार्थाः— वस्त्राणि-पात्राणि-भोजन पदार्थाः- इत्यादयोऽत्रापणेषु लभ्यन्ते । अथ यावद नवनवा गृहा निर्मीयमाणा एव दृश्यन्ते । अ काचि द्धर्मशालाऽप्यस्ति ।

नगरादस्मात् नजीबाबाद् बाष्पशकटाश्रयस्था प्रति कश्चिन्मार्गो याति । स च ६८अर्धक्रोशदीर्घः तत्र मार्गे—

| | | |
|---|---|---|
| ७ | अर्धक्रोशे | पौडीनगरम् । |
| १७ | " | अधवानि । |
| २९ | " | बाग् घाट् । |
| ४१ | " | डाडामण्डी । |
| ५३ | " | कोटद्वारम् । |

इति स्थानानि सन्ति । यद्यप्ययं मार्गो हरिद्वा मार्गात्समीपतरः, अथापि मार्गेऽस्मिन् जलसौख्य भावाश्च विशेषतो जना गतागतं कुर्वन्ति । सा धाह्रास्तु घोटकैर्मार्गेणाऽनेनानयन्ति पदार्थान् । प वहनशालाधिकृता अप्यनेनैव मार्गेण प्रेषयन्ति पत्रिदिकम् ।

महस्न् पुरं प्रति 'टेहरि' द्वारा कश्चिदन्यो मार्गोपीत: प्रवर्तते । स च १२१ अर्धकोशदीर्घः । तत्र मार्गे श्रीनगरात्—

| | | |
|---|---|---|
| ५ | अर्धकोशद्दूरे | मलेथा |
| ७ | " | डाङ्गचौडा |
| ११ | " | निलोरी |
| १४ | " | ढाल्गी |
| १८ | " | पौ |
| २८ | " | टेहरी |
| ३७ | " | कौडिया |
| ४१ | " | फालानाल |
| ४४ | " | कद्दूगाल |
| ४९ | " | धनौन्टी |
| ६१ | " | लौगा |
| ६७ | " | गाजपुरम् |
| ७३ | " | मसूरी |
| ७९ | " | देहरादून |
| ८९ | " | असरोगी |
| ९३ | " | मोहन |

नरकोटीतोपि निर्गत्यार्धक्रोश यावत्पर्वतमारुह्य क्रोशमात्रमवतीर्णः हरिद्वारात् ९६। तमेर्धक्रोशे वर्तमाना " गुलाबराय चट्टी " मभजम । अत्र काश्चि द्विगिनिर्झर· पञ्चपाः कुट्य आपणाश्च सन्ति । अत्रैव दिन रात्रिं चायापयम् ।

गुलाबरायचट्टीतः १९–५–०५ दिनेस्मिन् प्रात पञ्चघण्टावादनकाले निर्गतष्पड्घण्टा वादनकाले ऽत्रागच्छम् ।

अयञ्च हरिद्वारात् ९५ तमेर्धक्रोशे वर्तमान उपर्विशतिगृहात्मकोऽलकनन्दाया वामे तटे स्थितः कश्चित् ग्रामः । अत्र सर्वेप्यावश्यकाः पदार्था आपणे लभ्यन्ते । अलकनन्दाया दक्षिणे तीरे कश्चन शिवालय·, काचिद्धर्मशाला, द्वित्रास्तृणच्छन्ना गृहाश्च वर्तन्ते । अलकनन्द या उपरि लक्ष्मणझूलातुल्यः १३० हस्तदीर्घः द्विहस्तविस्तारोऽय.काष्ठमयस्सेतु रस्ति । अलकनन्दा सेतुनाऽनेनोत्तीर्य मन्दाकिन्यास्तीरेण सुदूर मुत्तरा दिश गत्वा, रुद्रप्रयागात् ५५ अर्धक्रोशे वर्तमान केदारक्षेत्र यान्ति केदारनाथसिषेविषवः पुरुषा· । बदरिकाश्रममेव जिगमिषवस्तु अलकनन्दामनुत्तीर्यैव तस्या वामेन तीरेण कर्णप्रयाग नन्दप्रयागादिमार्गेण बदरिकाश्रम यान्ति ।

रुद्रप्रयागात् केदारक्षेत्रयायिनां मध्ये मार्गे—

| | | |
|---|---|---|
| ४॥ | अर्धक्रोशे | बिलवडाचट्टी |
| ७ | " | रामपुरचट्टी |
| १०॥ | " | अगस्त्यचट्टी |
| १३॥ | " | मौण्डीचट्टी |
| १५ | " | चन्द्रपुरीचट्टी |
| १८ | " | भीरीचट्टी |
| २१॥ | " | कुण्डचट्टी |
| २४ | " | गुप्तकाशी |
| २४॥ | " | नालाग्रामः ( नालागाँव ) |
| २६ | " | भीतग्रामः ( भीतगाँव ) |
| २७॥ | " | व्युङ्गगढचट्टी |
| ३१ | " | फाटाचट्टी |
| ३४ | " | दोरगाँचट्टी |
| ३५॥ | " | रामपुरचट्टी |
| ४०। | " | त्रियुगीनारायणक्षेत्रम् |
| ४३ | " | सोनप्रयागः |
| ४६ | " | गौरीकुण्डः |
| ५०॥ | " | रामबाडाचट्टीय |

हरिद्वारयात्रिणां केदारनाथक्षेत्रपर्यन्तं गमनागमनाभ नन्त्रा

ग्रामं यावत्पूर्वोक्तमार्गेणाऽऽगत्य, " चमोली " स्थानं प्राप्नुवन्ति । तेषां मार्गमध्ये केदारक्षेत्रात्—

| | | |
|---|---|---|
| २८। शे | अर्धक्रोशे | ऊखिमठः |
| ३१ | " | गणेशचट्टी |
| ३२॥ | " | महादुर्गाचट्टी |
| ३३॥ | " | अल्पदुर्गाचट्टी |
| ३५॥ | " | पोथीबासाचट्टी |
| ३७॥ | " | कुन्दनचट्टी |
| ३८॥ | " | चौपत्ताचट्टी |
| ४४ | " | भीमचट्टी |
| ४५ | " | जङ्गल्चट्टी |
| ४५॥। | " | पाङ्गरचट्टी |
| ४९ | " | मण्डलचट्टी |
| ५३। | " | वीरभद्रचट्टी |
| ५५ | " | गोपेश्वरः |

इत्येतानि स्थानानि दृष्टिपथमुपयान्ति । चमोली तत्र येन मार्गेण साक्षाद्बदरिकाश्रमयायिनो गच्छन्ति तेनैवैतैरपि गन्तव्यं भवति । रुद्रप्रयागेऽत्र क्वचन पत्रप्रस्थापनशाला (Post Offico) ऽप्यस्ति।



देहल्या-दुर्गस्य द्वारम् ।

द्वित्रगृहात्मकः कश्चन ग्रामश्च, १०१। तमे द्वावल्पौ गिरिनिर्झरौ, १०१।। तमे गङ्गाया दक्षिणे तीरे ग्रामत्रय मल्पान्तरम्, १०१।।। तमे कश्चित् ग्राम', १०२। तमे द्वौ गिरिनिर्झरावल्पौ, १०२।।तमे 'शिवानन्दी' चट्टीच दृष्टिपथमगुः । रुद्रप्रयागात् २ घण्टाकाले निर्गतोऽहं सायं ६ घण्टाकाले शिवानन्दी चट्टीं प्रापम् । तत्र काचन धर्मशाला कश्चिदापणः, निर्मीयमाण' कश्चिच्छिवालय उच्चस्थाने कश्चित् ग्रामश्च सन्ति । अलकनन्दायामवतरणस्य मार्गस्समीचीनोऽस्ति । अत्रैव रात्रिमयापयम् ।

२०-५-०५ दिने प्रातश्शिवानन्दी चट्टीत स्सार्धपञ्चघण्टावादनकाले निर्गतोऽहं हरिद्वारात् ११०।।। अर्धक्रोशदूरस्थ 'पनायी' ग्रामोपकण्ठे वैष्णवाना स्थानमभजम् । मध्येमार्गं १०३ तमे ऽर्धक्रोशे द्वावल्पौ जलप्रपातौ, १०३। तमे किञ्चित्प्रस्रवणम्, अलकनन्दाया दक्षिणे तीरे ग्रामचतुष्टयञ्च, १०३।। तमेऽळकनन्दाया उपरि रज्जुमयडोलासेतुः, १०४तमे कस्याश्चिद्गिरिनद्या उपरि विंशतिहस्तदीर्घः काष्ठमयस्सेतु., जलघरट्टश्च, १०४। तमे कश्चिद्ग्रामः प्रस्रवण तत आरभ्य सुदूरं निम्नोन्नतेषु भूभागेषु दण्डश स्समीकृतेषु क्षेत्राणि च ।

## कर्णप्रयागात्।

रुद्रप्रयागात् १९-५-०५ दिने मध्याह्नात्परं २ घण्टाकाले निर्गतोऽद्य २१-५-०५ दिनेऽत्रागतोऽस्मि। प्रायेण सर्वेऽपि जना रुद्रप्रयागात्केदारक्षेत्रं गत्वा ततः प्रतिनिवृत्ता मार्गान्तरेण नन्दप्रयागात्परस्ताच्चमोली नाम्नि स्थाने बदरिकाश्रममार्गमेतं सङ्गच्छन्तीति मार्गेऽस्मिन् विरला एव जना दृष्टाः।

रुद्रप्रयागान्निर्गतस्य मे समीपतएव ९५ तमार्ध क्रोशप्रस्तरः, ततः परं कस्यचिद्वननद्या उपरि काष्ठमयसेतुः ९६॥ अर्धक्रोशे गङ्गाया दक्षिणे तीरे द्वौ ग्रामौ, ९६॥। अर्धक्रोशे पञ्चदशहस्तदीर्घ-काष्ठमयसेतुः कश्चिद्वननद्याः, क्वापि गुहा, ९७॥ अर्धक्रोशे उच्चस्थाने कश्चन ग्रामः, गङ्गा तरणाय रज्जुमयो दोलासेतुः, ९७॥। अर्धक्रोशे कश्चिज्जलप्रपातः, ९८ अर्धक्रोशे गङ्गावतरणमार्गः जीर्णं किञ्चिद्गृहम्, ९८। अर्धक्रोशे कश्चिन्महान् गिरिनिर्झर उच्चस्थाने कश्चन ग्रामश्च, ९८॥ अर्धक्रोशे कश्चिन्महान् गिरिनिर्झरो भग्नसेतुः, १००। अर्धक्रोशे अन्यौ द्वौ गिरिनिर्झरौ, १००॥ एवं महतो गिरिनिर्झरस्योपरि १९०३तमे वर्षे निर्मितदृढलोहमयसेतुः,

छित्रगृहात्मकः कश्चन ग्रामश्च, १०१। तमे द्वावल्पौ गिरिनिर्झरौ, १०१॥ तमे गङ्गाया दक्षिणे तीरे ग्रामत्रय मल्पान्तरम्, १०१॥। तमे कश्चित् ग्रामः, १०२। तमे द्वौ गिरिनिर्झरावल्पौ, १०२॥तमे 'शिवानन्दी' चट्टीञ्च दृष्टिपथमगुः। रुद्रप्रयागात् २ घण्टाकाले निर्गतोऽहं साय६घण्टाकाले शिवानन्दी चट्टीं प्रापम्। तत्र काचन धर्मशाला कश्चिदापणः, निर्मीयमाणः कश्चिच्छिवालय उच्चस्थाने कश्चित् ग्रामश्च सन्ति। अलकनन्दायामवतरणस्य मार्गोऽसमीचीनोऽस्ति। अत्रैव रात्रिमयापयम्।

२०-५-०५ दिने प्रातश्शिवानन्दी चट्टीत स्सार्धपञ्चघण्टावादनकाले निर्गतोऽहं हरिद्वारात् ११०॥। अर्धक्रोशाद्दूरस्थं 'पनायी' ग्रामोपकण्ठे वैष्णवानां स्थानमभजम। मध्येमार्गं १०३ तमे ऽर्धक्रोशे द्वावल्पौ जलप्रपातौ, १०३। तमे किञ्चित्स्रवणम्, अलकनन्दाया दक्षिणे तीरे ग्रामचतुष्टयञ्च, १०३॥ तमेऽलकनन्दाया उपरि रज्जुमयडोलामगुः, १०४तमे पश्चाच्चित्रिग्गिगा उपरि विंशतिहस्तदीर्घः काष्ठमयसेतुः, जलयन्त्रञ्च, १०४। तमे कश्चिद्ग्रामः प्रग्रयणं तत आरभ्य सुदूरं निम्नोन्नतेषु भूभागेषु खण्डशः स्सर्पीकृतेषु क्षेत्राणि च।

१०५। तमे प्रस्रवणं किञ्चित् नगगम् ग्राममार्गश्च १०५॥ तमेऽलकनन्दाया दक्षिणे तीरे ग्राम एकः, १०६। तमे 'बगड्वाम्चट्टी' एकापणकुटीद्वय प्रस्रवणवती, १०७। तमे कश्चिज्जलप्रपातः, १०७॥ तमे पञ्च प्रस्रवणानि, १०८ तमेऽलकनन्दाया दक्षिणतीरे पञ्चषा ग्रामाः, १०८। तमे कश्चन ग्रामः काचिद्गिरिनदी च, १०९ तमार्धक्रोशप्रसरमारभ्या धंक्रोशमात्रदीर्घोऽर्धपादक्रोशविस्तृतः खण्डद्वयात्मक स्समस्थलभूभागः, १०९ तमे वनस्थाने ग्रामा, ११०॥ तमे 'पनाई' ग्रामश्च सन्ति । स्थानेत्र दिन कृत्स्न मयापयम् ।

२१-५-०५ दिने प्रातः पञ्चघण्टावादनकाले ततो निर्गतश्च७घण्टावादनकाले कर्णप्रयागमभजम् । मध्येमार्गं १११। अर्धक्रोशे कस्याश्चिद्गिरिनद्या उपरि काष्ठमयस्सेतु. जलघरट्ट 'चटवापीपल् चट्टी' च, १११॥तमे अलकनन्दाया उपरि अयोमयो डोलासेतु, १११॥। तमे किञ्चित्प्रस्रवणम्, ११२ तमे प्रस्रवण मेकम्—अलकनन्दाया दक्षिणे तीरे ग्रामश्च, ११२॥ तमे नातिमहत्प्रस्रवणम्, ११२॥। तमे कस्याश्चिन्नद्या उपरि दशहस्तदीर्घ. काष्ठमयस्सेतु, ११३। तमे

काश्चिन्निर्झराश्च वर्तन्ते । हरिद्वारात् ११५ तमेऽर्धकोशे कर्णप्रयागोऽयमस्ति ।

कर्णप्रयागेत्र पंचविंशतिर्गृहास्सन्ति । काचन पत्रप्रस्थापनशाला ( Post Office ) राजकीयाप्यत्र वर्तते । अत्र पिण्डारकनद्या अलकनन्दायाश्च सङ्गमो भवति । इयमेव कर्णगङ्गेत्यपि कथ्यते । ऐशान्या अलकनन्दा समायाति, आग्नेय्याश्च पिण्डारक नदी। अलकनन्दा श्वेतवर्णा पिण्डारक नदी च हरितवर्णा दृश्यते । पिण्डारकनद्या उपरि कश्चनायोमयो डोला सेतुरप्यस्ति । पिण्डारकनद्यास्तीरद्वयेपि सन्ति गृहाः । तत्र प्रधानभागो ग्रामस्य दक्षिणे तीरे वर्तते । इतः कश्चन मार्गः ' काठगोदाम ' बाष्पशकटावस्थिति स्थानं याति । बदरिकाश्रमात्प्रतिनिवर्तमानाः प्राय स्सर्वेपि जना मार्गसुगमतामालोच्यानेनैव मार्गेण स्वदेशं यान्ति । केचिदेवतु हरिद्वारं पूर्वं वर्णितेन मार्गेण ।

अत्र काचिद्धर्मशाला वैद्यशाला नगररक्षणसैनिक स्थानं च वर्तते । सर्वेऽप्यावश्यकाः पदार्था आपणे लभ्यन्ते । कर्णेनात्र महान्यज्ञस्सूर्यमुद्दिश्य कृत इति कर्णप्रयागसंज्ञास्य क्षेत्रस्य समजनीति पौराणिकाः कथयन्ति ।

नन्दप्रयागात् ।

२२–५–०५

कर्णप्रयागात् २१–५–०५ दिने मध्याह्नात्परं ३ घण्टावादनकाले निर्गतोऽद्य प्रातरष्टघण्टावादनकाले आगतोस्मि । नन्दप्रयागोयं गढवाल्मण्डले पार्वत ग्रामेषु प्रधानतया परिगण्यते । अत्रोपचत्वारिंशाः प्रस्तरफलकाच्छन्ना गृहास्सन्ति । काश्चित् राजकीय पत्रप्रस्थापनशालाऽप्यस्ति । आपणेषु भोजनोपयुक्ता नकेवलं पदार्था लभ्यन्ते, किन्तु पात्रवस्त्रलेखिनी पत्रिकौषधाद्याः पदार्था अपि लभ्यन्ते । कस्तूरीचामर शिलारसाद्याः पार्वताः पदार्था अप्यत्र लभ्यन्ते ।

अत्र नन्दानाम्न्या नद्या अलकनन्दायाश्च सङ्गमो भवति । नन्दानद्या उपरि ५७॥ हस्तदीर्घोऽयोमयो डोलासेतुरप्यस्ति । तेन नन्दानदीमुल्लङ्घ्यैव नन्द प्रयागं समागन्तव्यम् । पर्वतस्योपत्यकायां नगरमिद मस्ति । अत्रस्थैनैव दूरात्तुषारखण्डमण्डितं पर्वत शिखरं रजतमयमिवाऽवलोक्यते । पूर्वं नन्दनाम्ना राज्ञा महान् यज्ञोत्रानुष्ठित इति नन्दप्रयागसंज्ञाऽस्य ममजनीति पुराणविदः ।

नन्दप्रयागोय हरिद्वारात् १२८ समेर्धक्रोशे वर्तते। कर्णप्रयागान्नन्दप्रयागमागच्छतो मध्येमार्ग—

| | | |
|---|---|---|
| ११७ समेर्धक्रोशे | | किंचित्प्रस्रवणम्, |
| ११७। | " | गिरिनद्या उपरि शिलामयस्सेतुः, अलकनन्दाया दक्षिणे तीरे ग्रामत्रयम्, |
| ११७॥ | " | कस्यादिचद्गिरिनद्या उपरिदश हस्तदीर्घ काष्ठमयस्सेतुः, |
| ११८ | " | तथाविधस्सेतुः, |
| ११८। | " | मार्गादधो ग्राम', |
| ११८॥ | " | गिरिनद्या उपर्यष्टहस्तदीर्घः काष्ठसेतुः |
| ११९। | " | तथाविधस्सेतुः, |
| | " | ' जयकण्डीचट्टी ' शिलामयैकगृहमात्ररूपा, |
| ११९॥ | " | अल्पप्रस्रवणम्, |
| ११९॥। | " | अलकनन्दाया दक्षिणतीरे ग्राम , |
| १२० | " | अल्पप्रस्रवणम्, |
| १२०। | " | गिरिनिर्झरस्यो पर्यष्टहस्त दीर्घः काष्ठसेतुः, |

नन्दप्रयागोयं हरिद्वारात् १२८ तमेर्धक्रोशे वर्तते। कर्णप्रयागान्नन्दप्रयागमागच्छतो मध्येमार्गे—

| | | |
|---|---|---|
| ११७ | तमेर्धक्रोशे | किंचित्प्रस्रवणम्, |
| ११७। | ” | गिरिनद्या उपरि शिलामय स्सेतुः, अलकनन्दाया दक्षिणे तीरे ग्रामत्रयम्, |
| ११७॥ | ” | कस्याश्चिद्गिरिनद्या उपरिदश हस्तदीर्घ काष्ठमयस्सेतुः |
| ११८ | ” | तथाविधस्सेतुः, |
| ११८। | ” | मार्गादधो ग्रामः, |
| ११८॥ | ” | गिरिनद्या उपर्यष्टहस्तदीर्घः काष्ठसेतुः |
| ११९। | ” | तथाविधस्सेतुः, |
| | ” | ‘ जयकण्डीचट्टी ’ शिला मयैकगृहमात्ररूपा, |
| ११९॥ | ” | अल्पप्रस्रवणम्, |
| ११९।॥ | ” | अलकनन्दाया दक्षिणतीरे ग्राम , |
| १२० | ” | अल्पप्रस्रवणम्, |
| १२०। | ” | गिरिनिर्झरस्यो पर्यष्टहस्त दीर्घः काष्ठसेतुः, |

| | | |
|---|---|---|
| १२०॥ | " | २५ हस्तदीर्घः काष्ठसेतुः जलघरट्टश्च, |
| १२१ | ,, | लिङ्गासूचट्टी–दशप्रस्तरगृहयुता, |
| १२२ | ,, | पर्वतारोहणमवरोहणंच, गृहद्वय युता काचिच्चट्टी |
| १२३ | ,, | महान् गिरिनिर्झरः, |
| १२४ | ,, | पञ्चषगृहयुता चट्टी, तथा उपरि शिलामयस्सेतुः, |
| १२४॥ | ,, | प्रस्रवणमेकम्, |
| १२४॥। | ,, | त्रीणि प्रस्रवणानि, १९०५ वर्षे निर्मितं राजकीयवनविभागाधि कृतस्य शिलामयं गृहम्, दक्षिण तीरे ग्राम एकः, "चीड" इत्यत्र व्यवह्रियमाणानां वृक्षाणा महद्वनम्, |
| १२५। | " | जामून चट्टी–पञ्चषकुटीरात्मिका, ग्रामश्च तथाविधः, |
| १२५॥ | " | दक्षिणतीरे ग्रामद्वयम्, |
| १२७॥ | " | गन्दाया उपरि डोलासेतु, रयोमयः, |

१२७॥ " गिरिनिर्झरस्योपरि शिलामय स्सेतुः,प्रस्रवणं चैकम्,
इत्येतानि नयनविषयतां गतानि ।

जोतिर्मठात् ।
२५-५-०५

नन्दप्रयागात् १३-५-०५ दिने मध्याह्नात्परं ३ घण्टाकाले प्रस्थितोऽहमद्य प्रातरष्टघण्टावादनकालेऽत्रा गतोऽभवम्। मध्येमार्गं १२८।तमेऽर्धक्रोशेप्रस्रवणद्वयम्, १२८॥ तमेऽल्पमेकं प्रस्रवणम्, १२९। तमे महदेकं प्रस्रवणम्,१२९॥ तमे कश्चिद्ग्रामो महान्निर्झरश्च१३९ तमे मठियाणीचट्टी, १३२। तमे कश्चिन्निर्झरः, १३१ तमे कोयलचट्टी, गिरिनद्या उपरि पञ्चदशहस्तदीर्घः काष्ठमयस्सेतुश्च,१३३। तमे शिलामयसेतुयुक्तो निर्झर एकः, १३३॥ तमे एककुटीरात्मिका चट्टी, १३४॥ तमे पर्वतमध्यभागे चमोलीग्रामः, १३५ तमेऽयोमयो ऽळकनन्दाया उपरि डोलासेतुः, १३५। तमे चमोली चट्टी निर्झरश्च कश्चित्, १३६॥ तमे कश्चन निर्झरः, १३७ तमे ' मठचट्टी ' १३७। तमे प्रस्रवणमेकम्, १३७॥ तमे गिरिनदी काचिद्भग्नपुनर्निर्मीयमाण शिलामयसेतुः पर्वतारोहणारंभश्च, १३८तमे आरोहण समाप्तिरेकं प्रस्रवणमवरोहणारम्भश्च,१३८। तमे कुटीर

प्रयात्मिका चट्टी प्रस्रवणद्वययुता, १३८।। तमे पञ्च गृहात्मको ग्रामः । १३९।। तमे भग्नसेतुर्गिरिनदी— " वालानीचट्टी " १४०।। तमे विरहवत्यलकनन्दयो स्सङ्गमः, १४०।। तमे प्रस्रवणमेकम्, १४०।।। तमे कश्चिज्जलप्रपातः, १४१ तमे शिलामयसेतुयुतो महा निर्झरः, १४१। तमे पञ्चपकुटीरात्मिका काचन चट्टी प्रस्रवणश्च, १४२ तमे " हाट् चट्टी " नारायण चट्टयपरनामधेया पञ्चगृहात्मिका प्रस्रवणश्च, १४२। तमे ऊर्ध्वभागे हानामाग्रामः, १४२।। तमेऽयोमयोऽ लकनन्दाया उपरि डोलासेतुः पर्वतारोहणारम्भः— प्रस्रवणश्च, १४३।। तमे पर्वतारोहणसमाप्ति , १४४ तमे कश्चिदालय , गुहाद्वयञ्च पुरतः, १४४।तमे प्रस्रवण द्वयम्, १४५।। तमे " पीपल् चट्टी ", १४८ तमे गरुडगङ्गाचट्टी भग्नसेतुर्गरुडगङ्गा पर्वतारोहणारम्भाश्च, १४९। तमे पञ्च कुट्यः, गिरिनदी च निर्मीयमाण काष्ठमयसेतुः' १४९।। तमे पर्वतारोहणारम्भः, १५०। तमेऽलकनन्दाया दक्षिणतीरे ग्रामः, १५०।। तमे नवीन।काचित्पञ्चपकुट्यात्मिका चट्टी, १५१ तमे देवदारुचट्टी — निर्मीयमाणकाष्ठसेतुर्गिरिनिर्झरः पर्वतारोहणारम्भश्च, १५२।। तमे पातालगङ्गाचट्टी काष्ठमयसेतुयुतपातालगङ्गा च, १५४ तमे गुलाबराद्

ग्रामः १५४। तमे गुलाबगढ़चट्टी—पर्वतारोहणारम्भः, १५४॥। आरोहणसमाप्तिः—अवरोहणारम्भश्च, १५५ तमेऽवरोहणसमाप्तिः, १५६ तमे कुम्हारचट्टी, श्रवणानि च, १५८॥ तमे पैनीचट्टी च मया दृष्टाः। ज्योतिर्मठश्च १६२ तमेऽर्धक्रोशे वर्तते।

नन्दप्रयागात् २३—५—०५ दिने मध्याह्नात्परं निर्गतोऽहं कोयलचट्ट्यां रात्रिमयापयम्, चट्ट्यामत्र सन्ति पञ्चषा गृहाः, समीपे प्रवहति काचिद्गिरिनदी। कोयल् चट्टीतः २३-५-०५ दिने प्रातः पञ्चघण्टाकाले प्रस्थितश्च नवघण्टाकाले "बाल्गनी" चट्टीं प्राप्य माध्याह्निकसाराधनमकरवम्। एतन्मध्ये १३५ तमेऽर्धक्रोशडोलासेतुनालकनन्दामुदतरम्, तत स्तस्या दक्षिणेन तीरेण चलितुमारेभे च। एताव त्पर्यन्तं मार्गोऽलकनन्दाया वामे तीरेऽभूदिति न नूनं वक्तव्यम्। श्रीनगराद्रुद्रप्रयागाच ये केदार क्षेत्रं गतास्ते सर्वे ततः प्रतिनिवृत्तास्सेतोस्समीपेऽ ळकनन्दाया दक्षिणे तीरे बदरिकाश्रममार्गं प्राप्नुवन्ति। तत आरभ्य केदारप्रतिनिवृत्तैस्साक्षाद्बदरिकाश्रम गामिभिश्चैकेनैव पथा गन्तव्यं भवति। बाल्गनी चट्टीतो मध्याह्नात्परं ३ घण्टाकाले निर्गतश्चाहं पीपल् चट्ट्यां रात्रिमयापयम्। १४०। तमेऽर्धक्रोशे चेयं

विरहवती नदी अलकनन्दया सङ्गच्छते तस्या नामापि १८९४तमखिस्ताब्दात्पूर्वं केनापि ज्ञातं स्यादिति नेदानीं निश्चितं वक्तुं प्रभवामि। तस्मिन् खिस्ताब्दे च सा तथा प्रसिद्धिमुपगता, यथा भारते आबालवृद्धमापामरपण्डितं च जनास्ता जानीयुः।

अत्रायमैतिहासिकोवृत्तान्तः— यत्र विरहवत्या अलकनन्दायाश्च सङ्गमस्ततष्षडर्धक्रोशदूरे गोहन ग्राममसीपेऽष्टसतहस्तोन्नत किञ्चित्पर्वतशिखरं निर्गीर्णं सत् १८९३ तमे खिस्ताब्दे सेप्टम्बरमासस्य षष्ठे दिवसे विरहवत्यामपतत्। महतस्तस्य गिरिशृङ्गस्य पतनेन विरहवत्याःप्रवाहः प्रतिरुद्धोऽभूत्। प्रतिरुद्धैनैकत्र सम्मिळता जलसमूहेन तटाकमिव किञ्चित्समजायत। क्रमशश्च तत्रापां दिने दिनेऽभिवृद्धिरजायत। स्वतोजातस्य रोधस्य भेदने महान्प्रयत्नः कृतो राजकीयैः। अन्ततश्चास्य तद्भेदनं ज्ञात्वा विरहवत्या अलकनन्दायाश्च तीरेषु ये ग्रामास्तद्वासिना प्राणरक्षणाय सर्वेऽपि ग्रामवासिनो नदीतीरेभ्यो निष्कासिता उन्नतमेषु स्थानेष्वधिवासिताश्चाभूवन्। तत्र गोहनाग्रामपर्यन्त तन्त्री च प्रतिष्ठिताभूत्। तत्र वार्ताहराश्च नियुक्ता अभूवन। तटाकं चाभिवृद्धं सार्धक्रोशविस्तृतं त्रिक्रोशदीर्घञ्चाजायत। १९०४ तमे खिस्ताब्दे आगस्टमासस्य पञ्चविंशदिवसे रात्री१२॥

घण्टावादनकाले महतस्तस्य जलरोधस्योपरितनो भागः ३२० पादोन्नतः पूरेणैकदाऽपहृतोऽभूत् । महता वेगेन महार्णवानुकारिजलप्रवाहः प्रावहत् । जलवेगश्च प्रतिघण्टं दशक्रोशक्रमेणासीत् । तेन च प्रवाहेण चमोलीग्रामः नन्दप्रयागकर्णप्रयाग रुद्रप्रयाग श्रीनगर देवप्रयागग्रामाश्च समूलं विनाशिता अभूवन्। हृषीकेशे तीरवर्तिन उटजास्सर्वेपि नष्टा । हरिद्वारेतु विशेषतो हानिर्नाभूत् । चमोलीग्रामे १६०पादोन्नतो जलप्रवाहः,नन्दप्रयागे११३पादोन्नतः कर्णप्रयागे१६० पादोन्नतः रुद्रप्रयागे १४० पादोन्नतः, श्रीनगरे ४२पादोन्नतः, देवप्रयागे७०पादोन्नतः, हृषीकेशे१८ पादोन्नतः, हरिद्वारे११पादोन्नतश्च जलप्रवाहआसीत् विनष्टेपु ग्रामेषु पूर्वोक्ताः प्रसिद्धाः प्रधानाश्च। अप्रसिद्धाश्च परश्शत ग्रामा विनष्टा । इदानीं परिदृश्य मानाश्च नन्दप्रयागादि ग्रामा नवीनतया निर्मिताः ।

चमोलीत आरभ्यालकनन्दाया दक्षिणेन तीरेण यान्तो वय १४७॥तमेऽर्धक्रोशे डोलासेतुनाऽलकनन्दा मुत्तीर्य पुनर्वामेन तस्या गन्तु प्रावर्तिष्महि। यत्राय सेतु स्तत्रालकनन्दायाः प्रवाहोत्यल्पवैशाल्यः । या किल काश्या क्रोशमात्रं भूभागमन्तर्धाय प्रवहति सैवात्र दशहस्तविस्तारेति विस्मयावहमिदम् । प्रवाहश्चात्रा गाधः ।



देहल्यां-दुर्गे-राजप्रासादे प्रधान सभाभवनम् ।

घण्टावादनकाले महतस्तस्य जलरोधस्योपरितनो भागः ३२० पादोन्नतः पूरेणैकदाऽपहृतोऽभूत् । महता वेगेन महार्णवानुकारिजलप्रवाहः प्रावहत् । जलवेगश्च प्रतिघण्टं दशक्रोशक्रमेणासीत् । तेन च प्रवाहेण चमोलीग्रामः नन्दप्रयागकर्णप्रयाग रुद्रप्रयाग श्रीनगर देवप्रयागग्रामाश्च समूलं विनाशिता अभूवन्। हृषीकेशे तीरवर्तिन उटजास्सर्वेपि नष्टा । हरिद्वारेतु विशेषतो हानिर्नाभूत् । चमोलीग्रामे १६०पादोन्नतो जलप्रवाहः,नन्दप्रयागे११३पादोन्नतः कर्णप्रयागे१६० पादोन्नतः रुद्रप्रयागे १४० पादोन्नतः, श्रीनगरे ४२पादोन्नतः, देवप्रयागे७०पादोन्नतः, हृषीकेशे१८ पादोन्नतः, हरिद्वारे११पादोन्नतश्च जलप्रवाहआसीत् विनष्टेषु ग्रामेषु पूर्वोक्ताः प्रसिद्धाः प्रधानाश्च । अप्रसिद्धाश्च परश्शतं ग्रामा विनष्टाः । इदानीं परिदृश्यमानाश्च नन्दप्रयागादि ग्रामा नवीनतया निर्मिताः ।

चमोलीत आरभ्याळकनन्दाया दक्षिणेन तीरेण यान्तो वयं १४२।।तमेऽर्धक्रोशे डोलासेतुनाऽळकनन्दा मुत्तीर्य पुनर्वामेन तस्या गन्तुं प्रावर्तिष्महि । यत्रायं सेतु स्तत्राळकनन्दायाः प्रवाहोत्यल्पवैशाल्यः । या किल काश्यां क्रोशमात्रं भूभागमन्तर्धाय प्रवहति सैवात्र दशहस्तविस्तारेति विस्मयावहमिदम् । प्रवाहश्चात्रा गाधः ।

पीपलचट्ट्या त्रिंशदधिका गृहास्सन्ति । राजकीय पत्रप्रस्थापनशालापि काचिदास्ते । आवश्यकाश्च सर्वे पदार्था अत्रापणेषु लभ्यन्ते । जलसौख्यं परं किञ्चिन्न्यूनम् । पर्वतशिखरस्थेयमिति शीतमत्राधिकम् ।

गरुडगङ्गाचट्ट्यां पञ्चषास्तृणाच्छन्ना गृहास्सन्ति । गरुडगङ्गा च प्रवहति । भगवतो वाहनतामभिलषता पतगाधिराजेन गरुडेनात्रमहत्तपोऽनुष्ठितमिति पुराणम् । गरुडगङ्गासन्निधिनदिशिलाखण्डा यत्र वर्तन्ते, तत्र सर्पभयं न भवतीति च प्रसिद्धिः । नयन्ति च शिलाखण्डान् जना इतः । पृष्ठतः प्रसारिताभ्यां हस्ताभ्यामनिरीक्षमाणेन पुरुषेण ग्राह्याश्शिलाखण्डा इति सम्प्रदायः ।

पातालगङ्गासमीपे नवीनमार्गोऽपूर्णनिर्माण इति प्राचीनेन मार्गेण गन्तव्यं भवति । अतिविषमेण मार्गेणाऽत्युन्नतपर्वतमारुह्यावतीर्णः प्राप्नोति पातालगङ्गां पुरुषः । एतावत्पर्यन्तं समीचीनेन मार्गेणागतः पुरुषोऽस्वल्पदूरीये प्राचीनमार्गेण सञ्चरन्ननुभवति प्राचीनमार्गस्य तु दुःखबहुलताम् ।

गुलाबगढ पर्यन्तं पूर्णमायो नवीनो मार्ग इति तावत्पर्यन्तं मेवाधर्मे दानमूपका. प्रस्तरसण्डास्थापि तारगन्ति । ततः परं मार्गोऽपूर्णनिर्माणः । तेन १५४

तमोऽर्धक्रोशप्रस्तरो न दृश्यते। तत्स्थाने प्राचीनमार्गस्थ बदरिकाश्रमात्तावत्पर्यन्तदूरसूचकोऽर्धक्रोशप्रस्तरोऽवल क्यते । स च १५४तमेऽर्धक्रोश प्रस्थरस्थानस्थो बदरि काश्रमं ५.६ अर्धक्रोशदूरस्थमवगमयति ।

गुलाबगढ्चट्टीत आरभ्य पर्वतारोहणं प्रवर्त तत्कठिनतमम् । सोपानपङ्क्तिभिः पर्वतस्य तत्रारोह कर्तव्यं भवति । तेन महदेव कष्टमनुभवन्ति जनाः

कुम्हारचट्टी तावन्मार्गादधोभागे वर्तते । प्राय विंशतिगृहास्तत्र सन्ति । सर्वे च पदार्था लभ्यन्ते प्रस्रवणद्वयञ्च तत्रास्ते ।

ज्योतिर्मठात् ।।अर्धक्रोशदूर एव मार्गो द्वेधा विभक्त भवति । तत्रैकः पर्वतमध्यभाग एव ज्योतिर्मठं प्रति याति । अन्यश्च क्रमेणाधोऽधः पर्वतस्य गच्छन् विष्णु प्रयागं प्राप्नोति । स च १। अर्धक्रोशदूर , ज्योतिर्मठ दपि कश्चिन्मार्गो विष्णुप्रयागं गच्छति । परं स मार्ग २। अर्धक्रोशदूरः ।

पातालगङ्गात आरभ्य ज्योतिर्मठपर्यन्तं मार्ग निर्माणं तत्र तत्र प्रवर्तते । यत्रयत्र मृत्तिकामिश्रित शिलाखण्डसमुदायरूपः पर्वतस्तत्र सर्वत्र मार्ग स्मरणनिर्माणः, यत्र च केवल महाशिलाखण्ड

मार्गः । परस्सहस्रं जनाः कुर्वन्त्यनारतं कार्यम् । ज्योतिर्मठोयं पञ्चाशत गृहैर्युक्तः पार्वतग्रामेषु प्रधान तया परिगण्यते । राजकीयपत्रप्रस्थापनशाला ( Post Office ) नगररक्षणसैनिकशाला ( Police station ) चात्र स्तः । ग्राममध्ये ज्योतिर्मठनामा कश्चिदस्ति मठः । नवमे खिस्तशतके श्रीशङ्कराचार्य स्थापितोयं मठ इति वदन्त्यत्रत्याः । मठमध्ये नृसिंहो भगवान् सालिग्रामरूपो विराजते । अवयवसंस्थानं च यथोचितमस्ति । एको हस्तस्त्वत्यन्त कृशो मणिबन्ध स्थाने । सूक्ष्मतन्तु समान परिमाणोयम् । यदायं विच्छिद्येत तदा सांप्रतिकबदरिकाश्रममार्गः प्रतिरुद्धो भवेदिति काचित्किंवदन्ती प्रथतेऽत्र ।

ज्योतिर्मठात् पूर्वतः पूर्वत आस्माकभारतराज्य सीमापर्यन्तं गच्छति कश्चिन्मार्गः । अन्यश्च प्राचीनो मार्गो बदरिकाश्रमं प्रति । यदा षण्मासान् हिमान्या समावृतो भवति बदरिकाश्रमस्तदा बदरिकाश्रम वासिनस्सर्वेप्यत्रैव वसन्ति । इतएव बदरीनाथस्य पूजनं भवतीति चैतिह्यम् । कार्तिकमारभ्यात्रापि हिमवर्षो भवति । अथ वसन्तेप्यत्र महच्छीतमनुभूयते। चतुर्दिशं हिमाच्छन्नानि पर्वतशिखराणि दृश्यन्ते । इत एव शीतस्य क्रौर्यं प्रथते । इत एकोनविंशत्यर्धक्रोशेषु, बदरिकाश्रमः ।

बदरिकाश्रमात् २८—५—०५

ज्योतिर्मठात् २६—५—०५ दिने प्रातः पञ्चघण्टा वादनसमये निर्गतो मध्याह्ने " घाट्चट्ट्यां " माध्याह्निकं भगवदाराधनं निर्वर्त्य सायं " लांगट् चट्टीं " प्राप्य रात्रिमयापयम् । २७—५—०५ दिने प्रातः पञ्चघण्टावादनसमये ततो निर्गतश्च " हनुमान् चट्ट्यां " माध्याह्निकाराधनं निर्वर्त्य, सायं पट्घण्टा वादनकाले बदरिकाश्रममिमं प्रापम् ।

ज्योतिर्मठात्पश्चिमतः ॥ अर्धक्रोशदूर एव मार्गो द्वेधा विभक्तो भवतीति पूर्वमेवालिखम् । तत्राधस्य मार्गेण प्रस्थितोऽहं १॥ अर्धक्रोशदूरे विष्णुप्रयाग मपश्यम् । मार्गविभागस्थानाद्विष्णुप्रयागपर्यन्तं पर्वतावरोहणं कष्टमाप्यम् । अन्तराश " धवल गङ्गा " ( विष्णुगङ्गा ) सुतीर्य विष्णुप्रयागं प्रति गन्तव्यं भवति । धवलगङ्गायामेतुर्योगपः कियद्भ्यो वर्षेभ्यः पूर्वं नष्टः । नवीनश्चेदानीं निर्मीयते । अभयतस्तीरयोर्भूरि परं पूर्णो । धवल गङ्गाया मध्ये स्थितां काचिन्महतीं शिलामाधारी कृत्य दारुमयस्तात्कालिकसेतुः निर्मितो वर्तते, यस्यो परि गन्तारो गुरुत्मनसा बिभ्युः । मार्गोऽस्मेगुरर्यन्त मवरोहणं पुनरारोहणच कठिनमतम् ।

अलकनन्दाया धवलगङ्गायाश्च सङ्गमो भवति विष्णुप्रयागे। सङ्गमस्थानपर्यन्तं यद्यप्यस्ति शिलाया मुत्कीर्णा सोपानपङ्क्तिः, अथापि महता वेगेन प्रवहन्त्योरुभयोर्नद्योस्सङ्गमे निमज्जनमनर्थायहं सम्भाव्यते। बहवश्च जनाः पात्रेण जलं परिगृह्य तेन स्नान्ति। विष्णुप्रयागे दशानधिका आपणास्सन्ति।

विष्णुप्रयागात् ११। अर्धक्रोशदूरेऽलकनन्दाया उपरि डोलासेतुरयोमयोऽस्ति। तेन गङ्गामुत्तीर्य, दक्षिणेनालकनन्दाया गन्तव्यं भवति। विष्णुप्रयागस्य सेतोश्च मध्ये कावन चट्टी नवीननिर्मिता वर्तते। मार्गश्च ज्योतिर्मठादारभ्य विषमः। ज्योतिर्मठपर्यन्त मेव नवीननिर्मितस्समीचीनो मार्गो निष्पन्नः। ज्योतिर्मठात् बदरिकाश्रमपर्यन्तं मार्गनिर्माणमालोच्यते। न चिरान्मार्गो निर्मितो भवेदिति सम्भावयन्त्यत्रत्याः। एतन्मार्गेण गतागतं कुर्वाणाः श्राम्यन्ति नितरां जनाः। पदे पदे निर्झराः प्रस्रवणानि जल प्रपाताश्च सन्ति यद्बुलमिति तेषामुल्लेखोऽनावश्यक इति मन्यमानो न लिखाम्यहम्। पद्मपानपि हस्ताग्र भागस्समो न याति। निर्झरतः खण्डशिलाभिः पूर्णश्च मार्गः कष्टतमः। प्रायो हस्तद्वयन्यूनविस्तारो मार्गः, क्वचित्क्वचित्तु एकहस्तन्यूनोऽपि दृश्यते।

पथमागताः । अलकनन्दायाश्च घनीभूतया हिमान्योपरि पतितया समाच्छन्नाऽऽदृश्या वर्तते । सेत्वाकारेण परिणतां हिमानीमुपरि गतागतं कुर्वन्ति जनाः । इतः प्रभृत्येव घनीभूतया हिमान्या मध्येमार्गं बहुषु स्थलेषु दर्शनमारभ्यते ।

लामृगाड चट्टीतः । अर्धक्रोशाद्दूरे काष्ठमयसेतुना ऽलकनन्दामुत्तीर्य तस्या वामेन तीरेण पुनर्गन्तव्यं भवति । १७६॥ समेऽर्धक्रोशे हनुमान् चट्टी वर्तते । पञ्चषा गृहाश्च सन्ति तृणाच्छन्नाः । हनुमान् चट्टी मानः पुरुषो द्वीपान्तरगतमिवात्मानं मन्यते । तुषार खण्डमण्डितान्यिना पर्वतांश्चतसृष्वपि दिक्षु नान्यत्कि मप्यवलोकयते । महान्तो वृक्षा अत्र न सन्ति। तृणगुल्माद यस्तु कामं दृश्यन्ते । शीतबाहुल्येन हिमानीद्र वमिश्रिते जले स्नातुं नाभिलष्यति मनः ।

हनुमान् चट्टीतः॥ अर्धक्रोशाद्दूरेऽलकनन्दाया उपरि काष्ठमयस्सेतुरस्ति, तेन सामुत्तीर्य कियद्दूरं दक्षिणेन तस्या गन्तव्यं भवति । १॥ अर्धक्रोशाद्दूरे पाषाणमयेन सेतुना पुनस्तामुत्तीर्य वामेन गन्तव्यं भवति । मध्ये च बहुषु स्थलेषु हिमानीमुपरि

गच्छति पथा । क्वचिद्यार्धकोशमात्रं हिमान्या समा-
च्छन्नाया अलकनन्दाया दर्शनमेव नाभूत् । लवण
राशिरिव शर्करासमूह इव च हिमानी परिदृश्यते ।
४ अर्धकोशदूरे गणेशगुहानामकं स्थानमस्ति । तत
एव बदरिकाश्रमस्य दर्शनं भवति । ४। अर्धकोशदूरे च
काष्ठमयस्सेतुरलकनन्दाया उपरि वर्तते । तेन ता
मुत्तीर्य पुनर्दक्षिणेन तस्या गन्तव्यं भवति । मध्ये
ऋषिगङ्गा हिमानीसमाच्छन्नाऽऽस्ते । तयैव तामतिलंघ्य
प्रविशन्ति जना बदरिकाश्रमम् । हनुमान् चट्टीतः
४॥ अर्धकोशदूरे , ज्योतर्मठात् १९ अर्धकोशदूरे
हरिद्वारात १८१ अर्धकोशदूरे च बदरिकाश्रमोऽय
मस्ति । हरिद्वारात् १०–५–०५ दिने प्रत्यूषे
प्रस्थितोऽहं २७–५–०५दिने सायमत्रागत इत्यष्टादश
दिवसा याता मार्ग इत्यायातम् । गणेशगुहास्थान एव
ग्रामवासिभिर्जह्नुभिर्वैष्णवैरालयपरिजनैश्च प्रत्युद्गतोऽहं
बदर्याश्रमं चिराभिलषितं प्राविशम् । रामानुज कूटे
चावासमकरवम् ।

बदर्याश्रमात् । ३–६–०५

बदरिकाश्रमः ।

हरिद्वारात् १८१ अर्धकोशदूरे वर्ततेऽयमाश्रमः ।
अस्याश्रमस्य पूर्वतः पश्चिमतश्च द्वौ पर्वतौ दक्षिणोत्तरेण

दीर्घौ तिष्ठतः। तयोर्मध्यभागे पाश्चात्यपर्वतस्योपत्य कायां तिष्ठत्ययम्। समुद्रजलात् १०४००पादोन्नतमिदं स्थानम्। ( Sea Level 10400 Feets ) प्राय शतं गृहा अत्र स्युः। सर्वेऽपि गृहाःकाष्ठमया एव। गृहाणां पटलान्यपि दारुमयाण्येव। अलकनन्दाया दक्षिणे तीरे क्रमोन्नते स्थाने वर्ततेऽयमिति ग्रामेऽस्मि न्वीथिका एकस्या उपर्युपरीति क्रमेण वर्तन्ते। धर्म शाला आपणाश्चात्र सन्ति बहवः। राजकीयपत्र प्रस्थापनशाला ( Post Office ) नगररक्षणसैनिक शाला ( Police Station ) चात्र स्तः। बाष्प शकटावस्थितिस्थानात्प्रस्थापिताः पत्रिका अत्र षष्ठे दिवसे समायान्ति।

ग्रामस्योत्तरभागे बदरीनारायणस्य दिव्यालयोऽस्ति। आलयमध्ये भगवान्नारायणो विराजते। सालिग्राम शिलामयो बद्धपद्मासनो योगमुद्रालंकृतकरद्वयो भगवतो नारायणस्य मूर्तिर्मध्यतः, तस्या वामभागे नरनारायणयोश्शिलामय्यौ मूर्ती, अग्रभागे उद्धवस्य नारदस्य च मूर्ती, दक्षिणभागे गरुत्मतो मूर्तिर्धातु मयी, कुबेरस्य सुवर्णमयी सुवर्णप्रतिकृतिश्च, सन्ति। भगवतो बदरीनारायणस्य मुखारविन्दमन्तरेणान्य नासिकाभवनाद्यवयवं निर्मोकतलयाऽऽच्छादयन्ति।

संस्थानं चास्ते । हस्तयोश्चरणयोश्चाङ्गुल्यादिकं न स्पष्टम् । श्रीमता शङ्कराचार्येणेममाश्रममागतेन नवमे ख्रिस्तशतके प्रतिष्ठापितेयमितीतिहासविदः । पूर्वमुखोऽयमालय इति भगवानपि पूर्वमुख एव । एकां बदरीनारायणस्य मूर्तिं विनाऽन्या स्सर्वा अपि नवीना इत्येव प्रतिभाति ।

भगवतोऽर्चकः परशुरामक्षेत्रनासिनम्पूरि-ब्राह्मण वंश्यः । चिरादेतज्जातीयैरेवार्चकैर्भाव्यमिति कश्चन नियमस्समायाति । आद्यत्विकोऽर्चको रामनम्पूरिः कोचिराज्यान्तर्गतमुरक्कनाडुस्थानवासी नारायणनम्पूरेः पुत्रः १६ वर्षवयस्कश्शिवद्विजः । अस्मात्पूर्वं ये येऽर्चकास्ते सर्वेऽपि प्राय ऊर्ध्वपुण्ड्र धारिण एव बभूवुः । अयं त्वविचारेणैव वा साम्यबुध्या वा तिर्यक्पुण्ड्रधरो धृतरुद्राक्षमाल एव च बदरीनारायण मर्चयतीति महदिदमनौचित्यम् ।

प्रातश्शङ्खघण्टावादन समये भगवानुत्थाप्यते । उत्थापनानन्तरमभिषेको भवति तप्तजलेन । अभिषेका नन्तरं वस्त्र पुष्पमाला भूषणैरलङ्क्रियते । तत श्शङ्खजलेन विरल्पशः प्रक्षिप्तेनार्घ्यादिभिस्सल्क्रियते । ततो धूपदीपाभ्यामर्च्यते । तिरस्करिण्यामास्तृतायां कुत्रचित्स्थले निहितं लड्डुकादिकं निवेद्यते । ततो

नीराजनानन्तरं तीर्थदानेन सेवापरा जनास्तोष्यन्ते ।
अपसृतेषु जनेष्वष्टघण्टावादनतः पूर्वमेव अत्यल्प
मन्नं पायसञ्च निवेद्यते । सायं पञ्चघण्टावादन समये
च प्रभूतमन्नं सूपवटकमिष्टान्नादिसहितं निवेद्यते ।
निवेदनानन्तरमपाकृतेषु पुष्पमाल्यवस्त्रादिषु
शयनासने निवेश्यते भगवान् । अयमेव प्रत्यहं
पूजायाः प्रकारः । शास्त्रीयया रीत्या यं कञ्चित्सिद्धान्त
मनुसृत्य पूजनमत्र भवतीति न वक्तुं शक्यते ।
ऐच्छिक्या रीत्या क्रियत इत्येव च वक्तव्यं भवति ।
अभिषेकसमये पुरुषसूक्तपाठो भवति । भगवानेव
जानाति यथाविधि भवति पूजनमन्यथा वेति । किं
मनयाऽस्माकं सुदूरादस्मिन्नागतानां सेवापराणां चिन्तया ।
प्रत्यहं ८८ सेर् भारतण्डुलानां पाको भवति । तदेवान्नं
निवेदितं भवति । सेवार्थमागतैर्भक्तजनैर्निवेद्यमाना
न्यन्नानीतोऽन्यानि ।

अर्चकोऽयमत्र " रावल " इत्युच्यते । आलयस्य
सर्वोऽधिकारो रावलाधीन एव । स एव कर्ता हर्ता च ।
ग्रामेभ्यो दशसहस्ररूप्यकाण्यायान्ति । भक्तजनैः
प्रतिदिनं पञ्चशतं रूप्याणि समर्प्यन्ते । प्रतिवर्षं
सार्धं पञ्चाशत्सहस्ररूप्याधिकायो भवति , विंशति
सहस्राधिकरूप्याणां व्ययश्च । अथ प्रतिवर्षमप

शिष्यन्ते बहूनि रूप्याणि । एतावदायवतो महालयस्य सर्व कार्यजातं महाममर्थस्य कस्यचिल्लौकिकवैदिक चतुरस्य विदुषोऽधीनं यद्यभविष्यत्तदा सम्यङ्निर्व्यूढ मभविष्यत् । किमिति राजकीया उदासतेऽत्रेति न वयं जानीमः ।

क्षेत्रेऽत्र तप्तकुण्डः, नारदकुण्डः, कूर्मधारा, प्रह्लाद धारा, ऋषिगङ्गा, इति पञ्च प्रधानानि तीर्थानि । बदरीनारायणालयात्पूर्वत. ६५ सोपानावरोहणीये स्थाने तप्तकुण्डो वर्तते । कुण्डोऽयं पञ्चदशहस्तदीर्घो द्वादशहस्तविस्तारः शिलामय उपरि लोहमयेन मण्टपेनाच्छन्नः । कुण्डस्य वायव्यकोणे द्वे धारे तप्त जलस्य पततः । सार्धहस्तद्वयोन्नतं जलं कुण्डे सर्वदा वर्तते । ततोऽधिकं पतच्च जलं द्वारान्तरेण बहिर्निस्सरति । धाराद्वयमपि पित्तलमयान्तस्सुषिरनलिका द्वारेण कुण्डे पतति । कुण्डस्थं जलं सुखोष्णं भवति । धारायां जलञ्च पतनावस्थायामसह्योष्ण्यं भवति । प्रायेण सर्वेपि देशान्तरागता जना अत्रैव स्नान्ति ।

तप्तकुण्डस्यैशान्ये समीप एव कानिचित्सोपाना न्यवरुह्य गतस्याऽलकनन्दायां नारदकुण्डो दृष्टिपथ मुपयाति । अलकनन्दायां पतितस्य महतश्शिला



देहल्यां-दुर्गे-राजप्रासादे-श्वेतप्रस्तरमयं सिंहासनम् ।

खण्डस्य गुहारूपेण परिणतस्यान्तर्वर्तमानो गर्तविशेष एव नारदकुण्डनाम्ना व्यवह्रियते । वस्तुतोऽलकनन्दाया एव कश्चिद्भागोऽयम् ।

कूर्मधारा तावद्बदरीनारायणालयस्याग्नेये किञ्चिदधोभागे वर्तते । कस्याञ्चिद्भित्तौ कूर्माकाराद्रन्ध्रविशेषा त्स्रवति धारा काचित् । सैव कूर्मधारेत्युच्यते। सलिलमस्याश्शीतम् । अस्या एव जलं पीयतेऽत्रत्यैः ।

प्रह्लादधारा कूर्मधाराया उत्तरभागे भित्तिरन्ध्रात्प्रवहति। अस्या जलमनुष्णाशीतम् । नियतवासिनस्सर्वेऽप्यत्रैव स्नान्त्यारोग्यकामनया ।

ऋषिगङ्गानाम्नी नदी बदरिकाश्रमग्रामाद्दक्षिणतः प्रवहति । सङ्गच्छते चाऽलकनन्दया । अस्या उपरि घनीभूता हिमानी पतितास्ते । अनुमीयतामस्या जलमुष्णं शीतं वा भवेदिति ।

बदरीनारायणालयस्य प्रथमावरणे निर्ऋतिकोणे धर्मशिलानाम्नी काचिदस्ति शिला । अस्या उपरि स्थित्वा मन्त्रं जपन् नातिचिरात्सिद्धमन्त्रो भवतीत्यैतिह्यम् ।

आलयस्यैशान्यभागे नातिदूरे गङ्गायास्तीरे ब्रह्मकपालनाम्नी काचिदस्तिशिला । अस्या उपरि

पितृनुद्दिश्य पिण्डप्रदानं क्रियते । प्रायस्सर्वेऽपि जना नारायणनिवेदितमन्नमाहृत्य पिण्डमात्र ददति । नचान्यत्किमपि श्राद्धादिकमनुतिष्ठन्ति । द्राविड देशीयाः परं विधिवच्छ्राद्धं कृत्वा पिण्डप्रदानं ब्रह्म कपाले कुर्वन्ति । अत्र पितृपितामह प्रपितामहान्, मातृपितामहीप्रपितामहीः, मातामह मातृपितामह मातृ प्रपितामहान्, मातामही मातृपितामही मातृप्रपितामही श्चोद्दिश्य श्राद्धं क्रियते । श्राद्धान्ते पूर्वोक्तेभ्यो द्वादश भ्यः पिण्डान् दत्वाऽन्येभ्यश्च केभ्यश्चित् कांश्चिदन्या नपि पिण्डान् ददति । पिण्डदानं चाधो लिखितान् श्लोकानुच्चरन्तः कुर्वन्ति ।

इमे तावत्पिण्डदानश्लोकाः—

अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥१॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥२॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥३॥
अजातदन्ता ये केचिन्नाग्निदग्धास्तथा परे ।
विद्युच्चोरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥४॥
दावदाहमृता ये च सिंहव्याघ्रहताश्च ये ।

दंष्ट्रिभिरशृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम्॥५॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये।
आत्मनो घातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ६
अरण्ये निर्जले देशे क्षुधया वा तृषाहताः।
भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम् ॥७॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥८॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥९॥
अनेकयातनासंस्थाः प्रेतलोके च ये गताः।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥१०॥
असंख्ययातनासंस्था ये नीता यमशासनैः।
तेषामुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥११॥
नरकेषु समस्तेषु यातनायां च संस्थिताः।
एतदुद्धरणार्थाय पिण्डमेतं ददाम्यहम् ॥१२॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् १३
जात्यन्तरसहस्रेषु भ्रमन्तस्स्वेन कर्मणा।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् १४
दिव्यन्तरिक्षे भूमौ ये पितरो बान्धवादयः।

मृता असंस्कृता ये च तेभ्यः पिण्डं ददाम्यहम् १५
ये केचित् प्रेत रूपेण वर्तन्ते पितरो मम ।
ते सर्वे तृप्तिमायान्तु पिण्डदानेन शाश्वतीम् १६
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥१७॥
पितृवंशे मृता ये च मातृवंशे तथैवच।
गुरोश्च गुरुबन्धूनां येचान्ये बान्धवादयः ॥१८॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
लुप्तक्रिया मृतायेच जात्यन्धाः पङ्गवस्तथा ॥१९॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
धर्मपिण्डो मया दत्तस्तेभ्यस्समुपतिष्ठतु ॥२०॥

आब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवाश्च ये मे ।
वंशद्वयेऽस्मिन्मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च ॥२१॥
मित्राणि सख्यः पशवश्च वृक्षाः
स्पृष्टाश्च दृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम सङ्गताश्च
तेभ्यस्स्वधा पिण्डमहं ददामि ॥२२॥

पिण्डदाना त्पूर्वं मावाहने चेमे श्लोकाः पठ्यन्ते—
" असत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥१॥
बन्धुवर्गकुले ये च गतिर्येषां नविद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥२॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥३॥
इति ।     तिलोदकं चानेन श्लोकेन दीयते—
" आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरस्सर्वे मातृमातामहादयः ॥१॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥२॥ "
इति ।

पिण्डदानानन्तरं परिविन्य प्रदक्षिणप्रणाम क्षाम णादिकं कृत्वा, पितृन्विसृज्य, तत इमान् श्लोकान् पठन्ति—
" साक्षिणस्सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मयाऽऽगतेन बदरीं पितृणां निष्कृतिः कृता ॥१॥
पितृकार्येण बदरीं नारायणसमागतः ।

मृता असंस्कृता ये च तेभ्यः पिण्डं ददाम्यहम् १५
ये केचित् प्रेत रूपेण वर्तन्ते पितरो मम ।
ते सर्वे तृप्तिमायान्तु पिण्डदानेन शाश्वतीम् १६
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥१७॥
पितृवंशे मृता ये च मातृवंशे तथैवच।
गुरोश्च गुरुबन्धूनां येचान्ये बान्धवादयः ॥१८॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
लुप्तक्रिया मृतायेच जात्यन्धाः पङ्गवस्तथा ॥१९॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
धर्मपिण्डो मया दत्तस्तेभ्यस्समुपतिष्ठतु ॥२०॥

आब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवाश्च ये मे ।
वंशद्वयेऽस्मिन्मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च ॥२१॥
मित्राणि सख्यः पशवश्च वृक्षाः
स्पृष्टाश्च दृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम सङ्गताश्च
तेभ्यस्स्वधा पिण्डमहं ददामि ॥२२॥

पिण्डदाना त्पूर्वं मावाहने चेमे श्लोकाः पठ्यन्ते—

" अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥१॥
बन्धुवर्गकुले ये च गतिर्येषां नविद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥२॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
आवाहयामि तान् सर्वान् कुशपृष्ठे तिलोदकैः ॥३॥

इति । तिलोदकं चानेन श्लोकेन दीयते—

" आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरस्सर्वे मातृमातामहादयः ॥१॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभवनाल्लोकादिदमस्तु तिलोदकम् ॥२॥ "

इति ।

पिण्डदानानन्तरं परिषिच्य प्रदक्षिणप्रणाम श्राम णादिकं कृत्वा, पितॄन्विसृज्य, तत इमान् श्लोकान् पठन्ति—

" साक्षिणस्सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मयाऽऽगतेन बदर्यां पितृणां निष्कृतिः कृता ॥१॥
विशालायां च बदरीं नारायणमुपागतः ।

त्वमेव साक्षी भगवन्ननृणोऽहं नृणां क्रमात्" इति।

पिण्डदानानन्तरं तत्रत्येभ्यो ब्राह्मणेभ्यो दक्षिणा दीयते। तत्र निर्बध्नन्ति ब्राह्मणा इयदेयम्, इद मल्पमिति।

बदरिकाश्रमं परितः पर्वतशिखरेषु घनीभूता हिमान्यवलोक्यन्ते, यया रजतताभ्रमुत्पादयन्ति पर्वतशिखराणि, तेन शीतमत्यधिकमत्र। प्रतिदिन मेव सायं घनास्सञ्चरन्ति गगने, वाति वायुः, तेन तदानीं महदेव शीतं भवति। हसन्तिकापरित्यागः कृच्छ्रेण कार्यः। सार्धपञ्चघण्टावादनकाल एवोदितोऽपि भगवान् सहस्ररश्मि रष्टघण्टावादनसमय एवात्रत्येषु पातयति करान्,संवृणोति च पुनस्सायं चतुर्थघण्टा काल एव, यतः पूर्वतः पश्चिमतश्चात्युन्नतः पर्वतो वर्तते। मध्याह्ने च प्रखरतमाः किरणा रवेश्शीत शीतेन वातेन सुखोष्णाः क्रियन्ते। कदाचिच्च प्रचण्डे वाति वायौ सूर्यकिरणाश्चन्द्रिकामनुकुर्वन्ति।

मेषमासस्यान्तिमभागे शुभदिने बदरीनारायणस्य पूजा समारभ्यते, तुलायां समाप्यते, ततः परं रात्र न्दिव मनारतं पतन्त्या हिमान्या समाच्छन्नमिदं स्थानं भवति। षण्मासा नगरस्था स्सर्वेऽपि ज्योतिर्मठे निवसन्ति।

त्वमेव साक्षी भगवन्ननृणोऽहं नृणां क्रमात्'' इति।
पिण्डदानानन्तरं तत्रत्येभ्यो ब्राह्मणेभ्यो दक्षिणा दीयते। तत्र निवेदयन्ति ब्राह्मणा इयदेयम्, इद मल्पमिति।

बदरिकाश्रमं परितः पर्वतशिखरेषु घनीभूता हिमान्यवलोक्यन्ते, यया रजतताभ्रमुत्पादयन्ति पर्वतशिखराणि, तेन शीतमत्यधिकमत्र । प्रतिदिन मेव सायं घनास्सञ्चरन्ति गगने, वाति वायुः, तेन तदानीं महदेव शीतं भवति । हसन्तिकापरित्यागः कृच्छ्रेण कार्यः । सार्धपञ्चघण्टावादनकाल एवोदितोऽपि भगवान् सहस्ररश्मि रष्टघण्टावादनसमय एवात्रत्येषु पातयति करान् ,संवृणोति च पुनस्सायं चतुर्थघण्टा काल एव, यतः पूर्वतः पश्चिमतश्चात्युन्नतः पर्वतो वर्तते । मध्याह्ने च प्रखरतमाः किरणा रवेश्शीत शीतेन वातेन सुखोष्णाः क्रियन्ते । कदाचिच्च प्रचण्डे वाति वायौ सूर्यकिरणाश्चन्द्रिकामनुकुर्वन्ति ।

मेषमासस्यान्तिमभागे शुभदिने बदरीनारायणस्य पूजा समारभ्यते, तुलायां समाप्यते, ततः परं रात्रिन्दिव मनारतं पतन्त्या हिमान्या समाच्छन्नमिदं स्थानं भवति। षण्मासा नत्रत्या स्सर्वेपि ज्योतिर्मठे निवसन्ति।

पुनर्मेषमासे प्रतिनिवर्तन्ते । कुद्दालादिहस्ताः परश्शतं नरा मार्गं समीकुर्वन्तो हिमखण्डमपसारयन्ति । आगत्य च घनीभूतां हिमानीं महता परिश्रमेणापसार्य सर्वं ग्रामं मन्दिरं हिमानीतो बहिर्निष्कासयन्ति । ततः पूजनं प्रवर्तते भगवतः । समायान्ति क्रमेण निवासाय जनाः । भगवता दर्शनाय च सेवार्थिनो जनाः । अद्य यावदत्र ग्राममध्येऽपि तत्र तत्र घनीभूतां हिमखन्वार्तिं शिलाखण्डमिवावलोकयामि ।

अत्रागच्छन्तस्सेवार्थिनो जना भगवते रूप्याणि सुवर्णं वस्त्राणि भोग्यानि च समर्पयन्ति । प्रतिदिनं कल्पमरूपेण यद्भगवतो निवेद्यतेऽन्नम्, तदर्थमपि द्रव्य मर्पयन्ति ' मदीयेन द्रव्येण भगवते निवेद्यता मन्न ' मिति । तथा दीयमानं चान्नम् " अटका " इत्युच्यते । कल्पमन्नं विना सेवार्थिभिर्निवेदनाय कार्यमाण मन्नादिकं मन्दिरान्तर्नीत्वा न निवेद्यते, किन्तु बहिरेव पिहितकवाटात् द्वाराभिधीयते । का वा हानिस्स्यात् अन्यथा सेवार्थिभिः कारितस्यान्नस्याप्यन्तर्नीत्वा नि वेदन इति तु विमृशतापि न ज्ञायते ।

बदरिकाश्रमग्रामात्पूर्वदिशायामलकनन्दाया वामे तीरे कुत्रचित् शिलाखण्डे महति नेत्राकारा रेखा

विशेषोऽस्ति । शेषनेत्रशब्देन स व्यवह्रियते । स
एव तस्य तटाकत्रयमस्ति, यदीय पानीय
स्वच्छं स्वादुतम नातिशीतं च । बदरिकाश्रमस
एतादृशं वारि दुर्लभमन्यत्रेत्यपि वक्तु शक्यते
भगवतो नारायणस्य पर्यङ्कभावमिच्छन् शेषोऽत्र त
ऽकरोदिति, भगवांश्च प्रसन्नो मनोरथमत्र पर्यपू
दिति, तत आरभ्यात्रापि शेषो भगवन्त पुरतो वर्तम
सेवमान आस्त इति, तथा विष्टतदृशोऽस्येव नेत्रमि
च कथ्यते ।

## वसुधारा ।

बदरिकाश्रमात्क्रोशत्रये वसुधारा नाम तीर्थमस्ति
तत्रात्युच्चतमात्पर्वतशिखराद्धारा काचित्पतति । अ
त्युन्नतस्थानात्पतन्तीं धारा महान्वायुरितस्ततो न
यति वर्षधारामिव, तेनैका नियतरूपेण धारा न
पतति । कदाचिदत्र, कदाचिद्दशहस्तदूरे, कदाचि
द्विंशतिहस्तदूरे चेत्यनियतरूपेण धारा पतति । तेन
तत्र स्नातुमिच्छता पुरुषाणा सर्वेषामुपरि धारा
पततीति निश्चित न वक्तु शक्यते । पापिनामुपरि धारा
न पतति, पुण्यात्मना पततीत्यैतिह्यम् । वसुधारायां
मार्गोऽतिविषम । प्रायस्सर्वत्रैव हिमान्या घनीभूताया
उपरि पादौ निक्षिप्य गन्तव्य भवति । महान् जडानिल

रसर्वदैव तत्र वाति । वृष्टिरपि भवति प्रतिदिन तत्र सर्वेषु कालेषु। तेन शीतमियत्तया परिच्छेदानर्हं भवति। आषाढमास एव मार्गः कथञ्चिद्गमनयोग्यो भवति । ततः पूर्वन्तु हिमान्या मार्ग एव न लभ्यते। बदरिकाश्रममागतेष्वरयल्पसंख्या एव वसुधारां गच्छन्ति । ऐषमस्तु मार्गोऽद्ययावद्धिमान्या रुद्धः ।

## सत्यपथः ।

बदरिकाश्रमात्सप्तक्रोशादूरे सत्यपथनामकं स्थान मुत्तरतोऽस्ति । त्रिक्रोशादूरवर्तिनो वसुधारास्थानस्य स्थितिः पूर्वं वर्णिता । तेनास्य कथञ्चिदनुमेया स्थितिः। सम्यग्वृष्टे देवे द्रवीभूतासु प्रायो हिमानीषु शीत वातादिसहो दृढात्मा यः कश्चित्पुरुषो महानत्र गन्तुं शक्नोति । अन्येषां नास्त्यवसरः । गतागतयो र्दिनद्वयं दिनत्रयं वा व्यत्येतीति भोग्यमन्नादिकं सहैव नेयं भवति । तत्र सूर्यकुण्डश्चन्द्रकुण्डश्चेति प्रधानं तीर्थद्वयम् । सूर्यकुण्डे सूर्योदयादारभ्य मध्याह्न पर्यन्तं क्रमेणाभिवर्धते जलम्, ततः क्रमेण ह्रसति च यथा यथा सूर्योऽस्ताचलमुपक्रमते । रात्रौ जलेन शून्यो भवति कुण्डः । चन्द्रकुण्डे शुक्लप्रतिपद मारभ्य पूर्णिमान्तं क्रमेणाभिवर्धते जलम्, कृष्णपक्ष

प्रतिपदमारभ्य क्रमेण ह्रासमुपयाति च । अमावास्यायां जलशून्यो भवति कुण्डः । त्रिकोणकुण्डनामा कश्चि दन्योऽपि कुण्डोऽस्ति । महासिद्धिमदं स्थानम् ।

## महापथः ।

महापथनामकं किञ्चिदन्यदपि स्थानं ततोप्युत्तरतो ऽस्तीति श्रूयते परम् । तत्रत्य प्राकृतिकवस्तुवर्णनं कोऽपि कर्तुं न शक्नोति, यतः कोऽपि तत्र गत्वा प्रतिनिवृत्तः पुरुषो न दृश्यते । एतादृशानि महाश्चर्यमयानि स्थानानि सन्ति बहून्यत्र । किं किमुपवर्ण्यताम् । सर्वथानुभवैकवेद्योऽस्य बदरिकाश्रमस्य महिमातिशय इति विरमामि ।

## किञ्चिदाश्चर्यम् ।

भगवतो नारायणस्य निवेदनाय बह्वन्नं प्रतिदिनं पच्यत इत्युक्तं पूर्वम् । तत्सर्वं भगवदालयाग्नेयकोणस्थ महानसे ब्राह्मणैः पच्यते । पाकाय सद्यश्छिन्नान्यार्द्राणि काष्ठान्येवोपयुज्यन्ते । तानि च प्रज्वलन्ति । यत्र शीतमये देशे शुष्कशुष्कान्यपि काष्ठानि श्रमेण दहत्यग्निः, तत्रार्द्रैःकाष्ठैः पच्यतेऽन्नमिति किं नेद माश्चर्यस्य स्थानम् । किञ्च—अष्टौ दिवसानस्माद् मतिष्ठम् । प्रतिदिनमपि पाको ऽस्माभिरक्रियत । ए-

कस्मिन्नपि दिनेऽन्नं सम्यङ् नाभवत् । कदाचिदपक्वं कदाचिदर्धपक्वमित्येवान्नमभुज्यतास्माभिः । अत्रत्याश्च पूज्यास्सर्वे स्वस्वगृहेष्वपीदृश्येव दशा पाकस्य त्यवर्णयन् । परं भगवतो निवेदनायाल्लये पच्यमान मन्न सम्यक्पक्वं गणनार्हपुलाकं दर्शनीयतमं चा दृश्यत । अयं भगवतो महिमेत्यवर्णयंश्चात्रत्याः । इदमपरमाश्चर्यस्थानम् । अचिन्त्यमहिमा हि भगवान् ।

## बदरिकाश्रममाहात्म्यम् ।

स्कन्दपुराणान्तर्गते " केदारखण्ड " नाम्नि भागे बदरिकाश्रममाहात्म्य विशेषतो वर्णितं वर्तते । स च केदारखण्डः पञ्चविंशतिसहस्रग्रन्थात्मको महान् । तत्र च न केवलं बदरिकाश्रमस्य, अपितु केदारक्षेत्रस्य देवप्रयागरुद्रप्रयागादीनां बदरिकाश्रममार्गस्थानाम-न्येषां च स्थानानां तीर्थानां च माहात्म्यं विस्तारेणानु वर्णितमस्ति । तस्यैतस्य महतो ग्रन्थस्य मुद्रणे प्रयतते नन्दप्रयागवासी पण्डित महेशानन्दशर्मा । तेनैव च महततस्मात् ग्रन्थात्संगृह्य भाषामय्या टीकया सह प्रकाशितमष्टादशाध्यायात्मकं त्रयोदशाध्यायात्मकं चेति माहात्म्यपुस्तकद्वयमस्मद्दृष्टिपथमुपागतम् । केदारखण्डनाम्नो भागस्य तामसस्कन्दपुराणान्तर्गत स्यार्थकवर्णनं स्फुटमिहानावश्यकम् , तामसपुराणा

न्तर्गतमित्येतावल्लेखनमेव तद्विषयेऽलमिति पश्यामि । यथा काशीप्रयागादिमाहात्म्यपरा भागास्तत्तत्पुराणेषु नोपलभ्यन्ते, तथैवायमपि मूलग्रन्थे नोपलभ्यत इति स्फुटकथनमेवेदम् ।

सनत्कुमारसंहितान्तर्गतमेकादशाध्यायात्मकं बदरिकाश्रममाहात्म्यमेकमपरमस्ति । संहितायास्तस्यास्सात्विकतया तदन्तर्गतमिदमपि तथैवेति न पृथग्वक्तव्यम् । मूलग्रन्थे दर्शनं त्वस्यापि दुर्लभमेव । बदरिकाश्रमसम्बन्धि वृत्तान्तजातवर्णनप्रकरणे तन्माहात्म्यवर्णनमप्युचितमिति मन्यमानोऽहमेकादशाध्यायात्मकमिदमेवावलम्ब्य संग्रहेणात्र किञ्चिद्विलिखामि ।

तत्र प्रथमेऽध्याये— नारदेन महर्षिणा बदरिकाश्रममाहात्म्यकथनं प्रार्थितो महामुनिस्सनत्कुमारो ब्रह्मणश्चतुर्मुखस्य सकाशाद्यथाश्रुतं तथा वर्णयामीति प्रतिज्ञाय बदरिकाश्रमवैभववर्णनमनुक्रमते ।

तत्र प्रथमं— " बदरी " " विशाले " ति नामद्वयमात्रवक्तापि वैवस्वतवन्द्यो भवतीत्याह । गरुडगङ्गा तस्समारभ्य सारस्वततीर्थपर्यन्तं नारायणाश्रम इत्यनन्तरमूचे । कण्वाश्रमादारभ्येति पक्षान्तरञ्च । अथ विष्णुप्रयाग केशवप्रयाग नन्दप्रयागयुक्

बदरिकाश्रमे वसन्तस्सर्वेऽपि नन्वचतुर्भुजा इति, बदरीवासिभ्यो वस्त्रान्नदातुरश्वमेधसहस्राधिकं पुण्यं भवतीति, तपोनिष्ठाद्भक्तिनिष्ठाज्ज्ञानानुष्ठानतत्परादपि च श्रेष्ठो बदरीवासीति, वेदान्तविद्यानिष्णातादपि बदरीवासी ध्यानार्चनादिरहितोऽप्युत्तम इति, नारायणाश्रमवासमात्रेण पुरुषार्थचतुष्टयमपि विनान्योपायेन पुरुषो लभत इति, सुदूरे वसन्नपि बदरीस्मरणमात्रेण नष्टसमस्तपापो भवतीति, बदरीगमनमात्रेणानिपापमहापातकोपपातकानां बुद्ध्यबुद्धिकृतानां नाशो भवतीति, बदरीगामिनं स्ववंश्यं दृष्ट्वा तत्पितरो "विष्णुलोकं वयं गमिष्याम" इति तुष्यन्तीति, सूर्यसोमोपरागकालयोरवश्यं बदरीं प्रति गन्तव्यमिति, बदरीं गत्वा ब्रह्मकपाले पिण्डदानं कर्तुं समर्थोऽपि यो गयायां पिण्डदानं करोति स पितरदृष्टापयन्तीति, वायुदेवनामा सूर्यवंशभवो नारदकुण्डाद्यदा नारायणमुद्धृत्य तस्य सत्कारं करिष्यति ततः प्रभृति बदरिकाश्रमसुगमो भविष्यतीति, [illegible] स्थाने विष्णोः कला यतः प्रभृति यावत्पर्यन्तं च तिष्ठेत्ततः पूर्वं ततः परं बदर्याश्रमो दुर्गमो भविष्यतीति, बदरिकाश्रमे सर्वदा वस्तुमसमर्थैः प्रतिवर्षमेकवारमपि बदरिकाश्रमो गन्तव्य इति, वृद्धत्वे सुमेरुगरिस्थे॥

प्रातस्तप्तकुण्डे मध्याह्ने नारदकुण्डेच स्नानं कार्यम्, भगवन्निवेदितेनैव वैश्वदेवादिकं श्राद्धमपि च कार्यम्। श्रोत्रियत्वाभिमानेन बदरीनारायण नैवेद्यं न परित्यजेत्, तथा परित्यागे महत्पातकं भवति, यतोऽत्र लक्ष्मीः पचति नारदो निवेदयति ततस्तदवश्यं ग्राह्यम्, भगवद्विषयकक श्रवणकीर्तनादिकं कर्तव्यम्, समर्थश्चे त्रिष्वपि कालेषु भगवतो दर्शनं कुर्यात्," इत्येवं वासनियमास्तत्र वर्णिताः ।

वासनियमवर्णनानन्तरं यात्रानियमाः कथिताः । तेचैवं— यात्रां चिकीर्षुः प्रथमं बुद्धयबुद्धिकृतानां पापानां नाशाय ऐहिकामुष्मिकसकलफलसिद्धये च बदरीं गच्छामीति सङ्कल्प्य, ब्राह्मणांस्तर्पयित्वा गुरून् द्विजान्नारायणं च नमस्कृत्य स्वगृहान्निर्गच्छेत् । स्तेयं हिंसां परान्नं च मध्येमार्गं परित्यजन्ननिषिद्धान्नपाना दिना शरीरं पोषयन्व्रजतो गृही वनस्थोऽन्योवा बदरीं गच्छेत् । मध्येमार्गं च कण्वाश्रमादिपुण्यस्थानानि पश्यन् पुण्यतीर्थेषु निमज्जन् ज्योतिर्धामस्थं भगवन्तं नृसिंहं प्रणम्य, विष्णुप्रयागे स्नात्वा, योगीश्वरमुपासीनः शेषं प्रणम्य, क्षेत्रपाठ नत्वा, दोलस्थानं गत

उपोष्यैक दिनम्, वैखानसतीर्थे प्रातस्स्नात्वा, कुबेर शिला प्राप्य ब्राह्मणेभ्यो यथाशक्ति दान कृत्वा, ऋषि गङ्गा प्राप्य तत्र स्नातो धृतनूतन वस्त्रः, तत एव भगवदालय प्रणमन्, कूर्मधारायामाचम्य, जयविजयौ प्रणम्य भगवदालय प्रविशेत्।

अथ भक्तिभरावनतः प्रेमार्द्रदृक् साष्टाङ्ग प्रणम्य प्रादक्षिण्येन भगवत्समीप गत्वा आपादमौलि भगवन्त नारायणं नरञ्च ससेव्य कुबेर कमलाञ्च प्रणम्योपायनं समर्पयेत्, तीर्थं प्रसादञ्च गृहीत्वा बहिर्निर्गच्छेत्।

अथ तप्तकुण्डे स्नात्वा पञ्चशिलाभ्यो बहिर्मौनी वपन कारयित्वा ऽलकनन्दाया बोधायनोक्तप्रकारेण स्नात्वा भगवन्त ध्यायन्नुपवास कुर्यात्।

तत. परेद्यवि प्रातरावश्यक कर्म निर्वर्त्य भगवन्तं ससेव्य पितृदेवादींस्तर्पयित्वा पितॄनुद्दिश्य विधि वच्छ्राद्ध कृत्वा ब्रह्मकपाले पिण्ड दद्यात। बदरीक्षेत्र वासिभ्यो वस्त्रधान्यधनादीनि यथाशक्ति दत्वा तत स्तेषामनुज्ञा प्राप्य भुञ्जीत।

अथापरेद्युरारभ्य सत्यवकाशे सति सौकर्ये सति च सामर्थ्ये बदरिकाश्रमस्थानि नानाविधानि तीर्थानि

बदरीगामी ब्रह्मज्ञानिभ्योऽपि श्रेष्ठ इति, सकृद्गतोऽपि यो नारदकुण्डे स्नातो नारायणं संसेव्य स्वशाखांचैकदाऽधीत्य प्रतिनिवर्तते योवा कृतोपवासत्रयोऽष्टाक्षरं लक्षं जप्त्वा प्रतिनिवर्तते योवा दरिद्रं कञ्चिद्ब्राह्मणमन्नवस्त्रदानेन तत्र वासयित्वा प्रतिनिवर्तते व एते त्रयोऽपि स्थिरवासितुल्या इति, बदरिकाश्रमे स्थूलसूक्ष्मसूक्ष्मतमशुद्धभेदेन चतुर्विधे, शक्तौ सविसम्भवे कुवेर शिलासारस्वततीर्थमध्यभागरूपे शुद्धे जपहोमार्चनदानवासादिकं कार्यं तदसम्भवे विष्णुप्रयागकुवेरशिला मध्यभागरूपे सूक्ष्मतमे तत्कर्तव्यं-तदसम्भवे पक्षितीर्थे विष्णुप्रयागमध्यभागरूपे सूक्ष्मे तत्कार्यं तत्राप्यसंभवे कण्वाश्रम पक्षितीर्थ मध्यभागरूपे स्थूले तत्कर्तव्यमिति स्थूलादिकमपि वाराणस्यादितोऽत्युत्तममिति, शुद्धक्षेत्रे चातुर्मास्यं कुर्वतां जीवन्मुक्तिर्भवतीति, पाण्डोर्मृत्यु स्थानं स्वर्गद्वारम्, वैखानसाश्रमा दुपरितनं स्थानं मुक्ति द्वारम्—तत्रैव मुक्तिकांक्षिभिर्देहत्यागः कार्य इति च प्रथमे ऽ ध्याये प्राह ।

द्वितीयेऽध्याये बदरिकाश्रमयात्रायां तद्वासे च नियमं कथयेति नारदेन पृष्टस्सनत्कुमारस्तं ब्रवीति ।

तत्रादौ वासं नियतवासोऽनियतवासश्चेति द्वेधा विभज्य, तयोरनियतवासापेक्षया नियतवासं श्रेष्ठ

भभिधाय, उभयविधस्यापि वासस्यासम्भवे यात्रापि वा कर्तव्येत्युक्त्वा, वासनियमानतुक्रमते।

"मनोवाक्कायैर्जन्तुमात्रस्य हिंसा वर्जनीया, आधिपत्याभिमानादिभिरदण्ड्यो न दण्डनीयः, अपि गङ्गाया उत्तरस्यां दिशि स्त्रियं मनसापि न गच्छेत्, एकादश्यामन्नवर्जनस्य सर्वत्रैव कर्तव्यस्यात्रापि कर्तव्यता किम्पुनर्न्यायसिद्धा, जलपानमप्यत्र वर्जनीय मिति विशेषः, प्रतिदिनं ब्राह्ममुहूर्ते समुत्थाय भगवन्तं गङ्गां सत्पुरुषांश्च प्रणम्य भ्रूमध्ये स्वगुरुं हृदि भगवन्तं च ध्यात्वाष्टोत्तरशतं बदरीनाथस्य नामान्यावर्तयेत्, पञ्चशिलानां भगवदालयस्य तीर्थानां नरनारायणा ख्ययोर्गिर्योश्च दूरे मूत्रोत्सर्गादिकं कुर्यात्, तथा शौचदन्तधावने अपि दूरे। स्नानसन्ध्यादिकं क्षेत्र कार्यम्, जपकाले गायत्र्या सह प्रणवस्यापि जपः कार्यः सन्ध्यानन्तरं गुरोर्बदरीनाथस्य च प्रणामः कार्यः, अष्टोत्तरशत प्रदक्षिण प्रणामा भगवतः कार्याः, भगव न्मन्दिरे गङ्गातीरे पञ्चशिलास्वन्यतमस्यां वा स्वेष्ट मन्त्रं जपेत्, स्ववर्णाश्रमानुगुण्येन स्वाध्यायार्चन होमादिकं कार्यम्, ततः पञ्चशिलां नमस्कुर्यात्, उप निषत्पाठश्च कार्यः, माध्याह्निकस्नानं प्रतिदिनं कार्यम्,

श्रयेत । अथ चेदसमर्थो नवा लब्धावकाशो नारद कुण्ड एव स्नायात् , यतो नारदकुण्डसमं तीर्थं त्रैलो क्ये दुर्लभम्, यतश्च नारदकुण्डे स्नात एव सर्वतीर्था प्लुततुल्यो भवति ।

ततो निजगृहान् प्रतिनिवर्तमानो मार्गेऽययार्था दधिकं वस्त्रधनान्नादिकं सर्वं बदरीनाथाय समर्पयेत् । इति ।

अथ तृतीयेऽध्याये नारदकुण्डादुद्धृत्य प्रतिष्ठा पितस्य भगवतो दर्शनादेः फलं महीति नारदेन पृष्ट स्सनत्कुमारस्सविस्तरं तदब्रवीति । तत्र नारदकुण्डे स्नात्वा भगवद्दर्शनाय नारायणालयं गच्छन्पुरुषो देवै रपि संस्तूयत इति, भगवन्मन्दिरं प्रविशन्तं द्वार पालैः ' नारायणोऽसौ जात ' इति भवति इति, प्रदक्षिणप्रणामादिकर्तुस्स्वरूपं ज्ञातुं न कोऽपि शक्त इति, बदरीनाथमूर्तिपूजनस्य माहात्म्यं वक्तुमशक्य मिति, गन्धपुष्पवस्त्राद्यैर्भगवदर्चकस्य या गतिस्तां शङ्कर एव वेत्तीति, मुष्टिमात्रमपि नैवेद्यं यो भगवते दद्यात्स साम्राज्यं प्राप्नोतीति, भगवदालयेऽखण्ड महादीपप्रदाताऽनन्तफलभाग्भवतीति, यो भगवदा लयं प्रविश्य भगवन्तं पूजयित्वाऽप्यनन्तरं प्रतिगृह्णाति



देहल्यां कुतुबमीनार-नामकः स्तूपः ।

स शोचनीय इति, योन्यतः प्रतिगृह्य बदरीनाथ कार्यार्थं व्ययं करोति स मध्यम इति, यः कुतोऽपि किञ्चिदप्यप्रतिगृह्णन् भगवन्तमर्चयति तं ब्रह्मादयोऽर्चन्ति भगवानपि नारायणस्तं नित्यमनुह्याति सचैहिकान् भोगान् भुक्त्वाऽन्ते कर्मबन्धविनिर्मुक्तो भवतीति, एकदापि भगवन्तं स्मरन्पुरुषो नरकं जन्मान्तरं वा नाप्नुत इत्यहं प्रति जानामीति, तादृशः पुरुषो यत्र कुत्रापि शरीरं त्यजन्निश्चितमन्ते भगवन्तं स्मरतीति, आपादमौलि भगवन्तं पश्यतोऽपि न संसारः किमुत स्पृशत इति, स्वसेवकानां भक्तिमनुत्तमां गतिञ्च भगवान् ददातीति, छत्रं चामरं भूमिं दासं दासीञ्च भगवते समर्पयन् सप्तसु जन्मसु साम्राज्यं प्राप्नुत इति, "शतायुर्वै पुरुषो भवती" ति श्रुत्युक्तशतवत्सरेषु यावन्तो वत्सरास्स्वायुषोऽवशिष्यन्ते तावतां वत्सराणां यावन्तो दिवसास्तावत्संख्यं बदरीनाथं परिक्रम्य प्रणमंस्ततो यत्र कुत्रापि संस्थितो यत्किञ्चिदपि कुर्वाणः पुरुषः पद्मपत्रमम्भसेव पापैर्नलिप्यते--अन्तेच तत्वज्ञानी वैष्णवामेसरो भवतीति, एतादृशं महाफलप्रदं बदरीनाथं परित्यज्य देवतान्तरमुपास्तेऽधमः पुमानहो कष्टमिति, भगवति बदरीनाथे संसेविते

संभवनीयान्तरं किमपि नास्तीति, बदरीनाथ एव भगवान्निखिलं जगत्सृजति संरक्षति विनाशयति च ब्रह्मादिरूपधृगिति, मत्स्यादिकल्किपर्यन्तविग्रहधारी भक्तानयमनुगृह्णातीति, खरतरनक्रवक्त्रसमाक्रान्तं गजेन्द्रमयमेवामोचयदिति, स्वीये नाभिपद्मे चराचरगुरुं चतुर्मुखमयमेवासृजदिति, भूतभव्यभवत्सकलचराचररूपेणायमेवावतिष्ठत इति, कर्मज्ञान भक्तिभिरयमेव समाराध्यते फलप्रदाता च तेषामयमेवेति, सालिग्रामशिलायामिव नरनारायणनामधेयगिरिद्वयमध्यभागे सदा भगवान् सन्निधत्त इति, आदौ निवातकवचान् संहृत्य देवताभ्य ऊर्वशीमयमेवाददिति, सोऽय मत्र नारायणकुण्डे नृसिंहरूपधारी कूर्मधारायां क्रोडरूपधरश्च वसतीति, आश्रमेऽत्र वसुधारा तप्तकुण्डो नारायणकुण्डस्तदा तदा रात्रिषु सुकृतिभिरश्रूयमाणा वेदध्वनिश्च दृष्टप्रत्ययहेतव इति, ग्रहाणां विकृतिर्जप्यमानानां मन्त्राणां मन्त्रौषधादिभिस्सिद्धौ विघ्नाश्च भगवत्प्रभावादत्र न सम्भवन्तीति, वृश्चिकमासस्य पञ्चदशदिवसादारभ्य मेषमासपर्यन्तं भगवत्प्रीतिकामो वैखानसाश्रमादुपरितने भागे न वसेदिति, तथा वसन्तं कुमेरो देवताश्च शपन्ति बदरिकाश्रमवासजन्यं फलञ्च तस्य नश्यतीति, तथा

निषिद्धेऽपि काले केचिदेकादश्यां नारदकुण्डे तप्तकुण्डे च स्नाने न दोषो वासः परं न कर्त्तव्य इति वदन्तीति, बदरिकाश्रमे वसता वेदाक्षराणि भगवन्नामानि च विनान्ये शब्दा नोच्चै रुच्चारणीया इति, नारायणगिरौ दूराद्दृष्टे बदरीनाथदर्शनफलं भवति गङ्गायाश्च भगवत्पदाम्बुजनिस्सृतायामर्चितायां भगवानर्चितो भवति तस्माद्धेमन्ते दूरान्नारायणगिरिं पश्यन् गङ्गां पूजयन्वैखानसाश्रमादर्वाग्वसेदिति, बदरिकाश्रमे म्रियमाणानां कर्णयोर्भगवांस्तत्वमुपदिशतीति, कलौ बदर्याश्रमं विना नृणां नान्या गतिरिति, बदरिकाश्रमवासी त्रिसन्ध्यं " बदरीनाथ विश्वात्मन् विज्ञाप्याशय मे प्रभो । भवत्क्षेत्राधिवासेऽस्मिन् भवत्पादसमर्चने " इति भगवन्तं प्रार्थयमानो निर्विघ्नं तदाश्रमवासं भगवदर्पनञ्च स्वाभीप्सितं लभत इति, अन्यक्षेत्रापेक्षया बदरिकाश्रमे कृतं जपादिकं क्षिप्रफलप्रदं भवतीति च प्राह ।

चतुर्थेऽध्याये तीर्थानां बदरिकाश्रमस्थानां माहात्म्यमनुवर्णितम् ।

सार्धास्तिस्रः कोट्यस्तीर्थानामत्र सन्ति, तेषु सर्वश्रेष्ठमलकनन्दा सप्ततीर्थमिति द्वयम् । अष्टषष्टितीर्थानि प्रधानान्येष्विति केचित्त्वयमन्ति मुनयः ।

ऊर्वशीकुण्डसम्भूताया कुल्याया य एकं मण्डलं स्नाति स रूपवान् भवति । श्वित्रादिरोगार्तश्चेदत्र स्नायान्मण्डलम्, सोऽपि रोगविनिर्मुक्तस्सुरूपश्च जायते।

अष्टोत्तरशतमावृत्तेन " यो देवाना " मिति मन्त्रेणानुमन्त्रितं कूर्मधाराया जलं यष्षण्मासा न्पिबति स विष्णुप्रियो भवति ।

' अग्नेनये ' ति मन्त्रेणाष्टोत्तरशतं जप्तेनानुमन्त्रितं प्रह्लादधाराजल यष्षण्मासान्पिबति स प्रह्लादव द्विष्णुभक्तो भवति ।

कूर्मधाराया मूलकुण्डं यस्य दृष्टिपथमुपयाति स एव वैष्णवाग्रेसरो नान्यो लाञ्छनमात्रधारी ।

कूर्मधाराया गव्यूतिमात्रे नरगिर्युपान्ते स्वर्णधारा भिधं तीर्थमस्ति, साक्षा न्मेरोर्विनिस्सृते तत्र विधिव त्स्नात्वा दिनत्रयमुपोषितो हरिमुपासीनो नरः कुबेरं पश्यति, कर्मण्यस्मिन् बहवो विघ्नास्सम्भाव्यन्ते भगवद्विमुखस्य, अतः प्रथमं बदरीनाथमभ्यर्च्य कर्मेदं कुर्यात् । प्रसन्ना दुबेरात्पाषाणं मृद्वा यदाप्नोति तत्सर्वं सुवर्णं भवति । अथ चेदस्मिन् जन्मनि न लभते धनम्, नूनमयं जन्मान्तरे महाधनिको भवेत् ।

वैखानसतीर्थे यस्संवत्सरं स्नातः फलाहारो वसति स मृत्युविजयी भवति। तत्रैव यस्सप्तलक्षसंख्यं प्रण वजपं कुर्यात्सर्ववेदार्थतत्वज्ञो जीवन्मुक्तश्च स भवति।

शेषतीर्थे मेषमासे यस्स्नाति तस्य सर्पभयं नास्ति। तत्रैव षण्मासान्नियमेन स्नानं कुर्वन्यो वसेत्स काङ्क्षितं फलं शेषप्रसादाल्लभते। शेषस्याग्रतो यो विवादे सत्य ब्रवीति स सुखी भवति, यो मिथ्यावादी स दुःखी च। प्रतिपक्षं चतुर्दश्यां निराहारश्शेषमर्चयन् यष्षण्मासांस्तत्र वसेत्स सर्वशास्त्रपारङ्गतो भवति।

होतृस्थानसमीपे यत्र पूर्वं पाण्डुर्गोसहस्रदानं चाकरोत्तत्र वसंस्तत्फलमाप्नोति।

बदरीनाथस्य वामभागे यदिन्द्रधाराभिधं तीर्थ मस्ति तत्र स्नातः प्रतिदिनं यस्संवत्सरत्रयमष्टोत्तर सहस्रं ' इन्द्रज्येष्ठानि ' इति मन्त्र जपेत्स खल्विन्द्र समो भवति।

यस्तावच्चतसृषु वेदधारासु षण्मासान् स्नाति स व्रात्योऽपि शुद्धो भवति। पितरश्च तस्य पयोघृता दिभिस्तर्पिता भवन्ति। कदाप्यस्यावैदिककुले न जन्म भवति।

वसुधारारयं यत्तीर्थं तददृष्टप्रत्ययकारकं चतुर्वर्ग फलप्रदं च। तद्धयतिपातकिना मूर्ध्नि न पतति।

तत्र स्नातो यो धर्मशिलायामुपविष्टो भक्त्या भगवन्त मुपास्ते सायुज्यमाप्नोति । यश्च तत्राष्टाक्षरं मन्त्र मष्टलक्षं जपेत्स वैकुण्ठं प्राप्नोति ।

सोमकुण्डनामकं किञ्चिद्दृष्टप्रत्ययकारकं तीर्थ मस्ति । तद्धि सोमस्य वृद्धिह्रासावनुसृत्य स्वयमपि वृद्धिह्रासौ भजाति । तत्रैवच तपस्तप्त्वा तपःप्रसन्ना द्भगवतस्सोमस्सर्वमहैश्वर्यमाप । तत्र शुक्ले पक्षेऽष्टाक्षरं जपन् षण्मासान्यो वसति स सिद्धिमाप्नोति ।

चक्रतीर्थस्नानं कुर्वन् तत्तीरे यस्सौदर्शनं मनुं जपन् मण्डलं वसति स तन्मन्त्रसिद्धिमाप्नोति । शत्रुविजयासमर्थ्यं च लभते ।

कल्पपादपं कामधेनुं च भक्त्या प्रदक्षिणीकुर्वन् शतस्रोतस्सु स्नातो बदरीनाथमभ्यर्च्य श्रीकराष्टाक्षर मन्त्रमष्टलक्षाणि यो जपेत्तस्य लक्ष्मीर्वशगा भवति ।

द्वादशादित्यतीर्थेषु सप्तसु भानुवारेषु स्नात्वा निराहारो मौनी " बृहत्साम " योभ्यसेदासन्ध्यं स समस्तरोगनिर्मुक्तो भवति, वैकुण्ठं चाप्नोति ।

सप्तर्षितीर्थं ध्रुवतीर्थं महारुद्रतीर्थं वायुतीर्थं मघतीर्थं मुचुकुन्दतीर्थं व्यासतीर्थादिष्वनन्तेषु तीर्थेषु कथिता कथितेषु स्नानं भगवद्भक्तिप्रदं भवति ।

व्यासपुस्तकनाम्नि स्थाने शम्याप्रासेवाऽध्यात्म चिन्तापरो यो वत्सरं वसेत्सवत्सरान्ते व्यासं पश्यति, तत्प्रसादाद्वेदान्तपारगो भगवद्भक्तश्च भवति।

केशवप्रयागे ऽनशनादिभिरुपायैर्यश्शरीरं त्यजति स वैकुण्ठं गच्छति।

सत्यपदाग्नि तीर्थे स्नात्वा भगवन्तं प्रणम्य महापथं प्रतिगन्तुं निर्गतः पुरुषो गव्यूतित्रितयानन्तरं वैकुण्ठपारिषदानीतं विमानमारुह्य महापथं याति यदि तावत्स्वेव न म्रियते। अथ चेन्म्रियते दिव्य देहेन वैकुण्ठं गच्छति।

अथ पञ्चमेऽध्याये सनत्कुमारोऽलकनन्दाया मा हात्म्यं स्वयमेव वदति।

तत्र प्रथमतः पितामहमुखान्मयैदमलकनन्दाया माहात्म्यं श्रुतमित्याह। बदरिकाश्रमे ऽलकनन्दायां विष्णौ च तुल्यतया भक्तिः कार्येत्यनन्तरमूचे। य एवं न करोति स यात्राजपादिजन्यं फलं नाप्नोतीति च ततो जगदे।

वैयासिकं वामिष्ठं मानवं रौद्रं ब्राह्मं सौरं चान्द्रं पैतृकं आर्षं सौदर्शनं भपास्यं माहेन्द्रं वारुणं चेत्येतानि तीर्थानि नारदकुण्डस्योत्तरस्यां दिशि

सन्ति, तेभ्यस्सर्वेभ्योऽप्युत्तमं नारदतीर्थम् । नारद तीर्थकणग्राही वायुर्यावद्दूरं वाति तावति दूरे जपार्चनादिकं प्रशस्ततमम् , इत्यनन्तरमुवाच ।

यत्र बदरिकाश्रमे वसतां कीटादीनामपि मुक्ति स्तत्रत्यैः कीटाद्यैरपि नान्यदेशवासी तुल्यः । तत्र हि देशे क्रियमाणं कर्मजातं बदरीनारायणे भक्तिमुत्पाद यति, अतस्तत्र वासः कार्यः । नारदतीर्थशीकरै रसिक्तः पश्वादिरपि देवताभ्योऽतिरिच्यते, विष्णु प्रियश्च भवति । यान् बन्धून् स्मरन् यः कश्चिन्नारद तीर्थे निमज्जति ते सर्वपापमुक्ता भवन्ति । भक्त्या भगवन्तं स्मरन्नारदतीर्थे यस्स्नाति स पुनर्जन्म ना प्नोति । दक्षिणादुत्तरेण द्वादशचापपरिमितं नारद तीर्थम् । तत्रापि शिलयोरन्तरालेऽप्युत्तमम् । श्रावणे कार्तिके च मासे सकृदपि तत्र स्नातो नरो गङ्गायमुनयो र्माघस्नानफलं लभते । ब्रह्महत्यादिमहापापकार्यपि नारदकुण्डस्नानमात्रेण पूतो भवति । तस्य सेतुदर्शनं अश्वमेधकरणं, भगवन्नामस्मरणं चेति पापहराणां कर्मणामभावेपि नारदतीर्थदर्शन मात्रेण पवित्रता जायते । नारदतीर्थमृदा यो लिप्तललाटो भवति स विष्णुतुल्यो भवति । इत्यनन्तर माह ।

नारदकुण्डादधोधः क्रमेणालकनन्दायास्तीरे वाराहं नारसिंहं आश्विनं कामठं लौकपालं वै

मानसं पाण्डवेयं शेषतीर्थं योगतीर्थं भारद्वाजं वैश्वामित्रं इत्येतानि तीर्थानि सन्तीति प्रोचे पश्चात् ।

त्रिविक्रमपदपङ्कजरेणुवाहिनी विष्णुगर्भतया विष्णु गङ्गेति विश्रुतेयमळकनन्दा बदरीनाथं गर्भे धत्ते । केशवाद्याः पञ्चाशन्मूर्तयोऽस्यां सन्ति निमग्नाः, इति जगाद तदनु ।

पूर्वं भगीरथेनानीयमाना गङ्गा कळयैकया भगीरथमन्वगात् । अन्यया च कळया बदरीनाथसंनिधे विपया बदर्याश्रममागात् । भगीरथे च गङ्गामेकपक्षां दृष्ट्वा प्राणत्यागोत्सुके पुनर्विष्णुगङ्गात्वधारिणी शुभ्रामक्षेत्रे भगीरथस्य दर्शनमदात् । ततः क्रमेण कपिलाश्रमं गत्वा सागरं प्राविशद्, इति पश्चात्प्राह ।

षष्ठेऽध्याये सनत्कुमारो बदरितीर्थमाहात्म्यं ब्रवीति ।

तत्रादौ बदरीनाथमुद्दिश्य कृतेन महता तपसा बद्रिर्नार्थितो प्राप्नुयाद् । ततो बदरीनाथप्रीतये दश कृत्वोऽग्निसेवनेन कृतेन यत्फलं लभ्यते, तदेकदाऽत्र तीर्थे स्नानेन भवतीत्यूचे । अन्यत्र तीर्थस्थानेषु लक्षजपेन यस्य कस्यचिद्विद्या मन्त्रस्य यत्फलं भवेत्तदेवात्राल्पजपेनापि भवेदिति ततो जगाद ।

पूर्वमग्निर्भगवन्तं बदरीनाथमुद्दिश्य घोरं तप स्तेपे । तपःप्रसन्नञ्च भगवन्तं वरद्वयमयाचत– " मत्तीर्थे स्नानाकरणे बदरीयात्रा नारायणदर्शन गङ्गा स्नानादिकं कृतमपि मोघं भवतु तदेव यात्रादिकं मत्तीर्थस्नानपूर्वकं कृतं शतगुणफलप्रदं भवतु " इति। अदाच्च भगवांस्तथाऽस्त्वित्यग्नये वरद्वयम् । तस्मादादौ वह्नितीर्थे समाहितस्स्नानं कुर्यादिति पश्चादाह ।

अग्नितीर्थधूमसंवलितवायुसंस्पृष्टो नरो दूरस्थोऽपि सर्वपापविनिर्मुक्तो भवति । विष्णुगङ्गासंयुक्ताग्नितीर्थ समीपे प्रायोपवेशेन यः प्राणांस्त्यजति स मृतः पावकलोकमतिक्रम्य ब्रह्मलोकं गतस्तत्र चिरमुषित्वा कल्पान्ते ब्रह्मणा सह मुक्तो भवति । इत्याह ततः ।

योऽत्रानलतीर्थे स्वं पापं जनेभ्यः कथयित्वा प्रायश्चित्तं करोति तस्य सर्वं पापं प्रणश्यति, प्रायश्चितञ्च प्रायोपवेशनं स्नानं चान्द्रायणव्रतं अध्यात्मचिन्तनमिति चतुर्विधम् । वह्नितीर्थप्रभावेन यत्पापं न नश्येत्तादृशं पापमेव जगति नास्ति । इति पश्चात्प्रोवाच ।

पुरा किलाग्निस्तपसा सन्तुष्टो भगवानग्निमेवमाह– "यथाहं त्वत्तीर्थसेवनात् तुष्यामि न तथा स्वस्ववर्णा श्रमधर्माणां यथाविध्यनुष्ठानेनापि द्विजातीनां तुष्यामि । यथा त्वत्तीर्थस्नानं मम प्रीतिकरं न तथा स्वाध्यायो

न्यद्वा मम प्रीतिकरम् " इति, तस्माद्वह्नितीर्थे प्रयत्नेन स्नानं कार्यम्। तर्पणं च पित्रादीनां विधेयम्। पार्वणश्राद्धाष्टकाश्राद्धेष्टापूर्तादीनां करणेन तादृशं फलं न लभ्यते यादृशं वह्नितीर्थस्नानेन लभ्यते। इत्य नन्तरं जगाद।

अग्नितीर्थेऽध्यात्मचिन्तां विष्णुनामसङ्कीर्तनं च कुर्वन् पुरुषस्सदा विष्णुप्रियो भवति। यः केवल मेतत्तीर्थयामपरो भवेत्स विष्णुचिन्तारहितोऽपि विष्णु प्रियो भवति किंपुनस्तच्चरणपङ्कजध्यायी। अग्नितीर्थेन पुण्यं देवर्षिपितृतृप्तिदं पापनाशकं सर्वकामप्रदञ्च तीर्थं मन्यमानित। इति पश्चात्प्राह।

देवद्विजनिन्दापरोऽपि पुरुषोऽत्र तीर्थे स्नातो वि- शुद्धात्मा भवति। यथा किल देवद्विजनिन्दाया अधिकं पापं नास्ति तथैव वैश्वानरतीर्थादधिकं तीर्थमपि नास्ति, बदरीक्षेत्रतुल्यं क्षेत्रं स्यादपि कदाचित्कुत्रचित् परतीर्थसदृशन्तु न क्वापि कदाचिदप्यस्ति। पावक तीर्थाभिधया यदि नारदतीर्थादन्यदपि तीर्थं विदितं विशिष्येन तर्हि विष्णोरपि कश्चिद्विशिष्येत देवः। तस्मादग्नितीर्थेऽस्मिन् होमो जपश्च सिद्धिकामैः कार्यः। शालिग्रामपूजनं च तत्र कार्यम्। इति ततः प्राह।

तीर्थेस्मिन्वसताऽन्यस्तुत्यादिकं न कार्यम् । निष्ठी वनमुच्छिष्टपातनं च तीर्थेस्मिन् वर्जयेत् । ताम्बूल भक्षणं चौर्यं नखलोमादिकृन्तनं शृङ्गारस्त्रीकथा दिकञ्च त्याज्यमेतत्सान्निधौ । विष्णोर्वह्नितीर्थस्य पञ्चशिलानां च मध्ये सोपानस्को गच्छ अपराधी भवति । यद्यपि जलमात्रे नग्नस्नानं निषिद्धं वह्नितीर्थेतु तद्विशेषेण प्रत्यवायावहं भवति । अतस्तत्र नग्नेन न स्नातव्यम्, यतः तीर्थेऽस्मिन् पञ्चशिला मध्ये च भगवान् वसति । इत्यनन्तरमाह ।

अथ सप्तमेऽध्याये प्रथमं शिलानां माहात्म्यं

सनत्कुमारः प्राह ।

हिरण्यकशिपुं हत्वा प्रह्लादमभिषिच्यात्र नृसिंह शिलात्मना नारायणस्तिष्ठति । जलनिमग्नां भुवमुद्धृत्य हिरण्याक्षञ्च हत्वात्राळकनन्दायां वराहशिलारूपधारी भगवानास्ते । नारदेन गरुत्मता मार्कण्डेयेन चार्थितो भगवांस्तत्तच्छिलासु सन्निधत्ते ।

नृसिंहशिलामपरिपक्वबुद्धयः केवलां शिलामेव पश्यन्ति । पक्वबुद्धयस्तु तत्वज्ञा ज्ञानानन्दात्मानं सर्वजगद्व्यापकं जगत्पतिमेव शिलारूपधरमवलोक यन्ति । केचित्तु भक्तिनिष्ठाशिलायामस्यां शस्त्र

चक्रादिदिव्यायुधैश्श्रीवत्सकौस्तुभाभ्यां च विराजमानं दंष्ट्राकरालवदनं वनमालाविभूषितं पीताम्बरपरीताङ्गं श्रिया समेतं प्रह्लादिगरुडादिभिर्मुनीन्द्रैश्च परीतं भगवन्तं साक्षात्कुर्वन्तो लौकिकैर्वैदिकैश्च स्तोत्रैस्स्तुवन्तः प्रदक्षिणप्रणामाद्यैरर्चयन्ति ।

नृसिंहशिलात्मनो भगवतस्सन्निधौ अर्घोदके च प्राणत्यागी पुरुषो मुक्तिभाग्भवति । तापनीयश्रुत्युक्तमार्गेणात्र भगवन्तमुपासीनः पुरुषो नरसिंहस्य प्रियो भवति । धर्मार्थकाममोक्षाख्यांश्च पुरुषार्थान् शिलात्मनो नृसिंहस्य प्रसादेन प्राप्नोति । नृसिंहशिलासमीपे स्वल्पमपि यत्किमपि स्वर्णं वा वदरीवासिने दत्वा शाश्वतं पदं प्राप्नोति । नरसिंहचतुर्दश्यामुपोष्य विधिवद्भगवन्तं नरसिंहमभ्यर्च्य ब्राह्मणान् भोजयन्नत्र सर्वं फलमवाप्नोति । साङ्ख्यमायुतपूजनेन यत्फलं तदस्याशिलायाः दर्शनमात्रेण भवति । नरसिंहशिलासमीपे आध्यात्मिकों चिन्तां कुर्वन् जीवन्नपि मुक्ततुल्यो भवति । अत्रोपवासत्रयकरणेन भगवान् विष्णुः प्रसादति ।

वराहशिलायामुपविश्य निराहारो ऽहोरात्रं वराहमन्त्रं जपन् सिद्धिमाप्नोति । यक्षगन्धर्वादिभिश्च स्त्रिय

माणान्विप्रान् बदरीपतिस्स्वयमेव निवारयति । अत्र जलमग्नार्धशरीरो यो वराहमन्त्रं लक्षं जपति तस्ये-न्द्राद्या अपि किङ्करा भवन्ति । दंष्ट्राग्रोद्धृतभूमिं वराहं ध्यायन् वराहमन्त्रमत्र यो जपति, स भूमिं लभते । वराहं प्रणवेनाभ्यर्चयन् कामादिपाशमुक्तो भवति ।

वराहशिलायाः प्राच्यां दिशि वाराहं तीर्थमस्ति । तत्र कृतस्नानो जपादिकं कुर्वीत । षण्मासान्वराहं तीर्थे भक्त्या स्नानं कुर्वन्पुरुषो वैकुण्ठं याति । वराह शिलोपरि पत्रपुष्पफलादिकमर्पयन्नानन्त्यमश्नुते । योऽत्र वराहमर्चयित्वा — " नमश्श्रीमद्वराहाय दंष्ट्रोद्धृतधराय च । स्वाङ्गतोयनिपातेन पवित्रीकृत वेधसे " इति भगवन्तं स्तुत्वा युद्धाय विनिर्गच्छति स विजयं लभते ।

नारदशिलायां बदरीनाथस्सदा सन्निधत्ते । नारद श्रीत्यै वेणुगानव्याजेन सकलान्वेदान् व्याकरोति च । मधुरां द्वारवतीं च त्यजन्नपि भगवान्नारदशिलां न तत्याज । बदरीं याहीति भगवता प्रेषित उद्धवोऽत्रा गत्य नारदशिलायां भगवन्तं दृष्ट्वा ननन्द । धृवोपि नारदशिलायामष्टाक्षरेण द्वादशाक्षरेण च विष्णु मभ्यर्च्य वत्सरत्रयादूर्ध्वं वेणुनादं श्रोष्यति । नारद

शिलासमीपे वसतां भगवांस्तुष्यति । नारदशिलायां नृत्यवाद्यदीपछत्रचामराद्युपचारैर्भगवन्तं पूजयन्तो भगवतः प्रिया भवन्ति ।

यत्र तपस्तप्त्वा गरुत्मता वाहनता प्राप्ता तत्र गरुड शिलायां शङ्खचक्रगदाधरो हरिः पूज्यः । गरुड शिलास्थं भगवन्तमष्टाक्षरेण पूजयन् देवानामपि पूज्यो भवति । गरुडशिलास्पर्शमात्रेणापि समस्त पापनिर्मुक्तो भगवत्प्रियो भवति, विषादिभिश्च न पीड्यते, गरुडशिलास्थो भगवान् सर्वाभीप्सितफल प्रदो भवति ।

मार्कण्डेयशिलायां ऋषिणा तेन याचितो भगवा मास्ते । मार्कण्डेयशिलायां नारदशिलायाञ्च नारदो नित्यं भगवन्तं पूजयति । मार्कण्डेयशिलास्थं भगवन्तं पूजयन् मुक्तो भवति ।

इत्येवं शिलानां माहात्म्यं तत्र वर्णितम् ।

अष्टमेऽध्याये पदर्शनाथाय यो भूगोमृत्यादिक मर्पयति तस्य किं फलम्? यश्च भगवतो गोभूहिरण्यादिक मपहरति तस्य वा किं फलमिति नारदेन पृष्टस्तत्- स्समारब्धदाह—

भगवते भुवो दानमिह परत्र च लोके दातुस्सर्व कामसमृद्धिदं भवति । सर्वपापक्षयकरञ्च । सालिग्राम शिलादानं च प्रशस्तम् । भूमिदाता सालिग्रामशिलाद श्चेह लोके सर्वान् भोगान् भुक्त्वा ऽन्ते मुक्ति मवाप्नोति ।

यस्तावद्भगवते समर्पयत्यादर्शं यथाविधि सोऽन्ते ऽर्चिरादिमार्गेण ब्रह्मलोकं याति । आदर्शदानेन दीप दानतुल्यं फलं भवति । यश्च भगवते दर्शयत्यादर्शं सोऽप्यादर्शदानफलं लभते ।

भगवतः पार्श्वयोर्यश्चामरं चालयति, यश्च भगवत शिरसि छत्रं धारयति, योवा चामरं छत्रं वा भगवते समर्पयति, तेत्र लोके सप्तसु जन्मसु साम्राज्यमनु भूयाऽन्ते वैकुण्ठं लभन्ते, भगवत्पारिषदेषु चान्त र्भवन्ति ।

यस्तावद्भगवते कस्तूरिकां ददाति, योवा घुसृण मर्पयति, यश्च वा गोरोचनादिकं हरिचन्दनखण्डं वा, ते सर्वे विष्णोर्दयिता भूत्वा लोकेऽत्रेप्सितान् भोगान् भुक्त्वान्ते विष्णोस्सायुज्यं लभन्ते । शर्कराघृतदुग्धादि दानादपीदमेव फलं भवति ।

द्रुपदराजतनया जन्मान्तरे पूर्वं कदाचिद्भगवतेऽत्र वस्त्रमेकमर्पितवती , तत एव द्रौपद्यास्तस्याश्शत्रु

सभामध्ये समाकृष्यमाणे वस्त्रे भगवतः प्रसादात् क्षयं न यास्यति वस्त्रम् ।

योऽत्र भगवते भृत्यान् ददाति स्वयम्, दापयति वा स विष्णोरन्यस्य भृत्यत्वं कदापि न याति । सर्वाधिपत्यञ्च विन्दति ।

यो निष्कामो भूत्वा भक्त्या बदरीनाथस्य मन्दिरं कारयति स भगवतोऽत्यन्तप्रीतिपात्रं भवति।

विष्णुतुल्यो देव इव दीपदानतुल्यं दानमपि जगति नास्ति । भगवते दीपदानात्मत्यात्रे ऽध्यात्मविद्या दानाच्च भगवान् दात्रे झटिति तुष्यति । भगवति तुष्टे च न किमप्यलभ्यं नामास्ति ।

भगवते सुदृतण्डुलादीनामन्नानां गुडमध्वादीनां च दानाद्दाता भगवतोऽतिमात्रप्रीतिभाजनं भवति।

तुलसीदलग्रथिताया मालायाः प्रदानेन भगवा निनरां तुष्यति । यादृशी प्रीतिस्तुलसीमालिकार्पणा द्भवति न तादृशी रत्नभारस्य स्वर्णकोटीनां चार्पणा दपि भवति भगवतः ।

अन्यैश्चानिपिदैस्सुगन्धिभिः पत्रपुष्पादिभि र्ग्रथितां मनोहारिणीं मालां भगवतेऽर्पयन् भगवन्तं तोषयति।

हरिचन्दनकर्पूरादिभिस्सुगन्धद्रव्यैर्वासितं शोभनं पानीयमर्पयतां भगवानात्मलोकं ददाति ।

पञ्चगव्यपूर्णेन केवलदुग्धपूर्णेन वा सौवर्णकलशेन यो भगवन्तमभिषेचयति तस्य सुकृतमियादिति परिच्छेत्तुमेव न शक्यते । स एव सर्वोत्तमो वैष्णवः ।

भगवत्पूजार्थं परिकल्पितानामुपकरणानामल्पेनापि यो ह्रासं कुर्यात्स विष्णुद्रोही महापातकी भवति । तादृशस्य पापि नोऽवलोकने महत्पातकं भवति । तद्दोष प्रायश्चित्ततया भगवच्चिन्तनं कार्यम् ।

गां मुखं माहिषीं भृत्यानन्यद्वा भगवते समर्पणीयतया प्रथमं सङ्कल्प्य ततो यो न ददाति स महापातक भाग्भवति ।

भगवत्सम्बन्धिनि यत्र कुत्रापि वस्तुन्यभिलाषं कुर्वाणो ममेदमिति तदभिमन्यमानश्च प्रेत्य विष्ठाया क्रिमिर्जायते ।

यो भगवतो वस्तु अण्वपि चाऽपहरेत्स मृतो घण्टाकर्णशूकेनासम्यावा यमकोटीर्निपीड्यते ।

भगवते गोमहिष्यादि दानेनाऽणिमाद्यष्टसिद्धयो ऽन्ते मुक्तिश्च लभ्यन्ते । एतादृशे पुण्यक्षेत्रे भगव-त्स्वापहारस्तस्मान्नैव कार्यं ।

इत्येव वर्णितं तत्र ।

नवमेऽध्याये सनत्कुमारो भगवान् केदारस्य दिशस्य माहात्म्यं स्वयमपृष्ट एव ववर्णितं ।

निखिलश्रुतिशिखरगीतं बदरीनाथस्य भगवतो वैभवं केदारेश्वरस्सर्वदा व्याकरोति तेन गीतं च देवास्समहर्षयश्शृण्वन्ति नृत्यान्ति च प्रीत्या ।

केदारेशस्स्वांशभूतेन घण्टाकर्णेन बदरीक्षेत्रं पालयति । देवमार्गातिलंघिनां कुपथगामिनां चायं शासनं करोति पुनश्च गतिं करोति ।

आजन्मसिद्धविज्ञानश्शुको ऽप्यस्य केदारेशस्य पूज नादेव कृतकृत्यो बभूव । ततश्च स्वजन्मभुवं स्वजनां श्च त्यक्त्वा मुकुन्दगतमानसो मुक्तो बभूव ।

इत्येवं केदारमहिमा ऽनुवर्णितस्तत्र ।

दशमेऽध्याये सनत्कुमारो बदरिकाश्रमयात्रां प्र पञ्चयति । निमित्तभेदेन समयभेदेन च बदरीयात्रा दर्शयति प्रथमं प्रतिजानाति ।

तत्राद्या प्रतिपर्व बदरिकाश्रमयात्रा मर्त्ययात्रासंज्ञा । तया कृतया भगवान् बदरीनायकः कर्तुस्सर्वपाप निवारणपूर्वकं सर्वान् वाञ्छितार्थान् ददाति ।

द्वितीया जन्मयात्रा । भगवान् बदरीनाथो दक्ष पुत्र्यां धर्मपत्न्यामाविरभूत् । अतश्च जन्मदिने भग वान् मातुस्सदनं-याति । भगवति मातृसदनं याति सर्वे देवास्सहर्षयो यान्ति तत्सदनम् । सदात्वे बदरि

रमया सह केदारनामा शिवोऽत्र सर्वदा सन्निहितो वर्तते । सच दर्शनमात्रेण प्रणिपातमात्रेण च झटिति प्राणिनां प्रसन्नो भवति ।

विष्णुप्रिये बदरीक्षेत्रे नृणां नित्यवासः केदारस्य प्रसादेनैव निर्विघ्नस्सम्पद्यते । भगवति बदरीनाथे भक्तिश्च तस्य प्रसादाद्भवति ।

केदारेश्वरे भक्तिहीनः पुरुषो बदरीनाथस्य प्रीति पात्रं न भवति न च तस्य बदरीनाथे भक्तिर्वा सम्पद्यते ।

बदरीनाथ एव केदाररूपधारी वर्तते, सच शनि वासरे प्रदोषसमये प्रदक्षिणनमस्काराद्यैः पूजित– स्सर्वसिद्धिदो भवति ।

केदारक्षेत्रस्य यात्रामात्रेणापि नरः कृतकृत्यो भवति किं पुनः प्रणिपातनमस्कारादिभिः केदारं पूजयन् पुष्प तोयादिकं च तस्मा अर्पयन् ।

अष्टम्यां चतुर्दश्यामार्द्रायाञ्च केदारयात्रां कुर्वन् सर्वैः पातकैर्मुक्तो भवति ।

केदारक्षेत्रे प्रतिदिनमेकादशवारान् शतरुद्रीयं यो जपेदभिषेकपूर्वं शिवस्य, स मण्डलाद्वाञ्छितसिद्धि माप्नोति ।

काश्रमस्य परितो योजनत्रयवर्तिभिस्तत्र गन्तव्यम् । तथा न गच्छन्तो विष्णुद्रोहिणो भवन्ति । येच तथा यात्रार्थं गच्छन्ति तेषां विप्रहत्यासहस्रजन्यं पापं नश्यति ।

तृतीया धर्मयात्रा । भगवतः पिता वसुधारायां निवसति धर्मः । शिलारूपं तं दृष्ट्वा वसुधारायामाप्लुता धर्मवृद्धिमाप्नुवन्ति । विना धर्मयात्रां बदरिकाश्रमयात्रा निष्फला भवति ।

चतुर्थी भवनयात्रा । सिंहराशिगते सूर्ये श्रवण नक्षत्रे बदरीनाथालये यात्रा भवति । सेयं सर्वाभ्युदय दात्री निश्श्रेयसदायिनी च । तामिमां यात्रां कुर्वन् द्वादशाब्दान् गङ्गायामाप्लवनेन यत्पुण्यं तल्लभते । इयञ्च यात्रा प्रथमतो नारदकुण्डे स्नात्वा ततः कर्तव्या ।

सिंहे कर्कटके चालकनन्दा रजस्वला न भवति । अलकनन्दाभिन्नानां नदीनां रजस्वलात्वं भवति ।

पञ्चमी वैखानसयात्रा । सा च श्रीरामनवम्यां भवति । तस्मिन् दिने मध्याह्ने वैखानसतीर्थे नृत्य वाद्यघोषेण ब्रह्मघोषेण श्वेतछत्रादिभिरुपचारैश्च पूजनी यो भगवान् , यतस्तत्र विखनसामुनिना रामभद्राख्य भगवान् पूर्वं प्रपूजितः ।

षष्ठी कृष्णयात्रा । सा च कृष्णाष्टम्यां भवति । तस्मिन् बदरिकाश्रमे भगवत उत्सवः कार्यः, सा च यात्रा चतुर्विधपुमर्थदायिनी भवति । तस्मिन्दिवसे ब्रह्मादयो देवास्स्वेन स्वेन विमानेन तत्रायान्ति । यात्रायामस्यां योऽल्पमपि बदरीनाथमुद्दिश्य ब्राह्मणेभ्यो दद्यात्तस्याश्वमेधसहस्राधिकं पुण्यं भवति । यात्रा मिमां त्यजन् पुरुषो ब्रह्मघातुको भवति । अनुतिष्ठंश्च निरयं न याति ।

सप्तमी नृसिंहयात्रा । सा च नरसिंहचतुर्दश्यां भवति । तस्मिन् दिने सन्ध्यायां भगवत उत्सवः कार्यः । ब्रह्माद्या देवा मुनयश्च तस्मिन् दिने भगवत उत्सवं कुर्वन्ति । नृसिंहशिलायां बदरीनाथालये च सोयमुत्सवः कार्यः ।

अष्टमी नवमी दशमी च क्रमेण शयनयात्रा बोधन यात्रा परिवर्तनयात्रा च कथ्यते । शयन्यां बोधन्यां परिवर्तनैकादश्यां च ता अनुष्ठेयाः । यात्रादिवसे जलमपि न पिबेत् । यात्रात्रयमिदं बदरीनाथस्य महत्यै प्रीतये भवति ।

इति तत्र यात्रादशकं वर्णितम् ।

एकादशे ऽध्याये वसिष्ठाऽरुन्धती संवादरूपे वद रिकाश्रममाहात्म्यं सनत्कुमारो नारदायाह ।

तत्रादौ वदरिकाश्रमक्षेत्रं कियन्मानम् ? तत्र वासा दिना किं फलं भवति ? आश्रमे तस्मिन् केन केन तपस्तप्तम् ? एतत्सर्वं मे समासतो ब्रूहीत्यरुन्धत्या पृष्टो भगवान् वसिष्ठः क्षणं ध्यात्वा भगवन्तं नम स्कृत्य प्राहेति जगाद ।

कण्वाश्रममारभ्य नन्दपर्वतपर्यन्तं स्थानं वद रिकाश्रमक्षेत्रम् । तच्च भुक्तिमुक्तिप्रदम् ।

कण्वोनाम कश्चिन्महर्षिः, तस्याश्रमे वसन्तं रमा पतिं भगवन्तं नत्वा दुरात्मानोऽपि शाश्वतं पदं प्राप्नु वन्ति ।

नन्दप्रयागे स्नात्वा ये भगवन्तं रमापतिं पूज यन्ति तेषां मुक्तिः करस्था भवति । न किमपि तस्या॰ साध्यं नामास्ति फलम् ।

यत्र ब्रह्मादयो देवा अन्येऽच हरिभक्ता निवसन्ति तां नानातीर्थगण्डितां वदरीं ये नरा गच्छन्ति ते नाम धन्याः । तस्य पुण्यमहिमेयानिति वर्णयितुं न शक्यते ।

यो बदरिकाश्रमे वस्तुमशक्नुवन् मनसाऽपि तद्वासं भक्त्या चिन्तयति सोऽपि वासफलं लभते । ये च तत्र स्वयं निवसन्ति ते मरणानन्तरं विष्णुतुल्या भवन्ति ।

बदरिकाश्रमक्षेत्रं स्थूलं सूक्ष्मं सूक्ष्मतरं शुद्धं चेति चतुर्धा । तत्र योजनत्रयविस्तारं द्वादशयोजनदीर्घञ्च । महैश्वर्यदायकं तत्पापिनामगम्यम् ।

यो वा विशाला बदरीति नामापि वा स्मरति सोऽपि तद्वासीव मृतो मुक्तिमाप्नोति ।

गन्धमादनपर्वते बदरीवने नरनारायणाश्रमो वर्तते । तत्र कुबेरशिला नानाविधानि तीर्थानि च सन्ति, सर्वे देवास्तापससङ्घास्तत्र निवसन्ति । बदरिकाश्रमस्य [illegible] तत्र [illegible] भवति ।

यो बदरीनाथस्य नैवेद्यं मोहात् त्यजेत्स चण्डालादप्यधमो ज्ञेयः । न कस्मिन्नपि धर्मे तस्यास्त्यधिकारः । स्वयं लक्ष्मीरत्र पचति नारायणश्च स्वयं भुङ्क्ते अतश्चण्डालस्पृष्टमप्यन्नं भुक्तं न दोषाय भवति । येन बदरीनाथनैवेद्यं भुक्तं स [illegible] ।

यो बदरीनारायणस्य मूर्तिं मनसाऽपि संस्मरेत्तेन सर्वं तपस्तप्तं सर्वा च क्रिया कृता ।

क्षेत्रे तत्र माषमात्रमपि सुवर्णं रजतं वा ब्राह्मणाय यो दद्यात्स जन्मान्तरसहस्रेषु दरिद्रो न भवति । यो वा बिन्दुमात्रमपि जलं पितृभ्यो ददाति स पितॄणा मनृणो भवति ।

लोभमोहसमाविष्टे धर्मविवर्जिते कलौ बदरी गामिन एव धन्याः । यो वा स्वयं बदरीं गन्तुम शक्तोऽपि बदरीं गमिष्यामीत्यसकृद्वदति सोऽपि तत्फल माप्नोति ।

बदरीवासिनो लोका विष्णुतुल्या भवन्ति । तेषां दर्शनमात्रेण पापनाशो भवति । तस्मात्सर्वथा बदरी वासः कार्यः । स च पापिनामपि मुक्तिदो भवति ।

काशीकाञ्चीमथुरागयाप्रयागाऽयोध्याकुरु जाङ्गलादि वासेनापि न तादृशं पुण्यं यादृशं बदरी वासेन भवति ।

बदर्यां पुण्यक्षेत्रे साक्षात् सरितां वरा पापौघविध्वं सिनी गङ्गा प्रवहति, भगवानपि विश्वात्मा स्वयं सन्नि धत्ते । ब्रह्मरुद्रगन्धर्वाप्सरः किन्नरगुह्यकयक्षरक्षांसि भगवद्व्रतमानमानि वसन्ति ।

यावत्प्राणा ध्रियन्ते यावदिन्द्रियाण्यविकलानि, गात्रं चाशिथिलं, तावदेव बदरीं गच्छेत्पुरुषः । नात्र वि लम्बः कार्यः ।

सूक्ष्मे क्षेत्रे ऋषिगङ्गोत्तरभागे गत्वा दिनमेकं क्षेत्रो प्रवासः कार्यः । प्रातर्गङ्गायां नारदकुण्डादिषु स्नात्वा ततो वह्नितीर्थे स्नायात् । तत उपायनहस्तो बदरीनाथ भवनं गच्छेत् । भगवन्तमाकिरीटादङ्घ्रिपद्मान्तं भक्त्या पश्येत् । यथाशक्ति ब्राह्मणेभ्यो दद्यात्, ततो भगवन्तं प्रदक्षिणीकृत्य तत्र तत्र तीर्थस्थानेषु ब्राह्मणेभ्यो यथा शक्ति दद्यात् ।

दीपदश्चक्षुराप्नोति स्वर्णदश्च वपुरुत्तमम्, अन्नद स्सर्वदा सुखी भवति । सुवर्णादिधातुदो भागधेय मवाप्नोति ।

य एवं यात्रां विधिपूर्वकं कुरुते स पुन र्जन्म न लभते । अश्वमेधादियज्ञानां फलञ्च लभते ।

इत्येवं वसिष्ठारुन्धतीसंवादरूपं बदरीमाहात्म्यं कथयित्वा सनत्कुमारोऽन्ते माहात्म्यपठनश्रवणादि फल मुक्त्वा समापयति माहात्म्यम् ।

एवमेकादशाध्यायात्मकसनत्कुमारसंहितान्तर्गतं ब दरीमाहात्म्यं सङ्ग्रहेणास्माभिः प्रादर्शि ।

कर्णप्रयागात् । १३–६–०५

पाठकमहाशयाः ! बदरिकाश्रमसम्बन्धि लेखनीयं यथामतियत्नं सङ्ग्रहेणालिखं पूर्वम् । अथेदानीं पुन स्ततः प्रतिनिवर्तमानो मार्गादिकमधिकृत्य लेखनीं चालयामि ।

यद्यपि महती समुत्कण्ठासीन्मासमात्रमपि वा बदरिकाश्रमे वस्तव्यम्, आवर्तनीयश्चाष्टाक्षरो मन्त्रो जन्मस्थानेऽत्राक्षरलक्षसंख्ययावापीति, अथाप्यनुचरणां पाचकादीनां च शारीरमस्वास्थ्यमवलोक्या निच्छयापि प्रतिनिवृत्तौ मतिमकरवम् । भगवति शासतरि लोकस्यान्यथा सङ्कल्पयति मानुषमात्रस्य मे सङ्कल्पः कथं नाम कल्पतां परिपूर्त्यै । अतश्चाष्टौ दिवसानेव परमुषित्वा ततः प्रातिष्ठे ।

४–६–०५ दिने प्रत्यूषे पञ्चघण्टावादनसमये गृहीतभगवदनुज्ञो बदरिकाश्रमात्प्रातिष्ठे । जन्मभूमि सन्दर्शनसमुत्कण्ठा च तदात्वे मनसि पदमकलयत् । तयैव च प्रोत्साहित इवाहमिव सर्वेऽपि सहचरा द्रुतपदं सञ्चरितुं शक्ता अभवन् । पर्वतशिखरादधोऽधो गच्छंश्च मार्गस्साहाय्यकमाचरत् । तेन च नातिश्रमेण बदरिकाश्रमान्निर्गता एकपातेनैव सार्धदश घण्टावादनसमयेऽतिक्रम्य हनुमान् चट्टीं लाम्बगड चट्टीं च शेषधारामभजाम । गमनसमये यावान्मार्गः किञ्चिन्न्यूनाधिकभावेन सार्धऽदिनमगम्योऽभूत्स एवेदानीमर्धेन दिवसस्यातिक्रान्त इति महिमायं जन्मदेशसन्दर्शनत्वरायाः । शेषधारा च बदरीवनात्सार्धदशार्धक्रोशेषु वर्तत इति न पुनर्वक्तव्यम् ।

त्कष्टमुपजनयति। ९ । घण्टासमये स्थान मेतत्प्राप्ते-
ष्वपि रिक्तहस्तेष्वस्मासु केषुचिद्भारवाहिनो मध्याह्नात्परं
३ घण्टावादनकाल एवागच्छन्निति मार्गक्लेशोऽनुमी-
यताम् । वयमपि तावद्रिक्तहस्ता अपि महान्तं श्रम
मन्वभवाम तस्मिन् दिने । एतच्छ्रमपरिहारायैव ज्यो
तिर्मठे दिनचतुष्टयं व्यलम्बिष्महि ।

प्रथमे ९-६-१५ दिने किञ्चिदुपशान्तश्रमा नवो
त्पन्नोत्साहाश्च मध्याह्ने १२ घण्टाकाले ज्योतिर्मठा
न्निर्गता वयं सायं ४ घण्टाकाले " गुलाबृगट् "
चट्टीं प्राप्य तत्रैव रात्रिं यापयितुमैच्छाम । मन्ये
स्मरन्ति पाठका अत्रैव किञ्चिदुच्चतमः पर्वतश्रृङ्गो महता
श्रमेणारोहणीय आसीद्गमनसमय इति । तस्मादेव
पर्वतश्रृङ्गादवरुह्य परिश्रान्तानां तत्रैव वासोऽरोच
तेति किमिदं चित्रम् । यतस्त्वारोहणेन यावान् श्रमो
न तावानवरोहणेनेत्यनुभवसिद्धमिदम् । अथापि
सोऽयमनुभवो गुरुत्वेममाद्रिश्रृङ्गमन्यत्रैव चरितार्थतां
भजत इति मन्यामहे वयम् । एतन्मध्ये च गमन
समये समीक्रियमाणा दृष्टा मार्गभागा आगमनसमये
पूर्णसमीकरणा अभवन्निति सुगमोऽभवन्मार्गः ।

नन्दानद्युत्तरणं कार्यमिति च लेखनं पुनर्लेखनमेव । तस्यैव सेतोस्समीपात्कश्चन मार्गो याति ''ग्वालन्दू'' ( Gualandoo ) ग्रामं प्रति । मार्गेणानेन गमन मतीव कष्टसाध्यमिति प्रायेण केऽपि न गच्छन्त्येव ।

१३-६-७५ दिने प्रातः पञ्चघण्टाकाले जय चण्डीचट्टीतो निर्गत्य सार्धसप्तघण्टावादनसमये कर्ण प्रयागमिममभजम् ।

बदरिकाश्रमादेतावत्पर्यन्तं मार्गेऽधोलिखितक्रमेण चट्ट्यस्तासां दूरं चावगन्तव्यानि ।

| बदरिकाश्रमात् अन्तरोशाः । | चट्यादिनामानि । |
|---|---|
| ४॥ | हनुमान् चट्टी |
| ८॥ | लामबगड् चट्टी |
| १०॥ | दोपधारा |
| ११ | पण्डकेश्वरः |
| १३ | पाटनचट्टी |
| १७॥ | विष्णुप्रयागः |
| १९ | ज्योतिर्मठः |
| २३॥ | सैनापत्ता |

१०-६-०५ दिने प्रत्युषसि ४॥ घण्टाकाले ततो निर्गत्य ८ घण्टाकाले प्रातर्गरुडगङ्गाचट्टीं प्राप्य तत्र कृतमाध्याह्निकाराधनाः पुनः ३ घण्टाकाले ततोऽपि निर्गत्य सायं ६ घण्टाकाले हाट् चट्टीं प्राप्य तत्रैव रात्रिमयापयाम, मध्येमार्गं च पाताळगङ्गास्थाने नवीनमार्गस्यापूर्णतया पर्वतारोहणावरोहणे कृते। गरुडगङ्गायास्सेतुश्चोपलखण्डैर्निर्मीयमाणो दृष्टः। पर्वत शिखरस्थां पीपल् चट्टीमतिक्रम्य पर्वतादवरुह्य आगता वयमिति नावश्यं वक्तव्यं पठितपूर्वभागानाम्।

११-६-०५ दिने प्रातः पञ्चघण्टाकाले ततः प्रस्थाय चमोलीमप्यतिक्रम्य कोयल्चट्ट्यामेव माध्याह्निकाराधनायातिष्ठाम। निर्वर्त्य चावश्यकं सर्वं कर्मजातं ३। घण्टाकाले ततोऽपि निर्गत्य सायं ५॥ घण्टासमये नन्दप्रयागं प्राप्य तत्रैव रात्रिमयापयाम। १२-६-०५ दिने मध्याह्नपर्यन्तं तत्रैवातिष्ठाम। ३ घण्टाकाले पुनस्ततो निर्गत्य सायं ६॥ घण्टाकाले जयकण्डीचट्टीं प्राप्य तत्रैव रात्रिर्यापिता।

नन्दप्रयागान्निर्गत्य कर्णप्रयागमागच्छतां मध्ये मार्गं नन्दप्रयागस्य नातिदूर एव नन्दानद्या उपरि कश्चन सेतुर्दृष्टिगोचरो भवतीति तेनैव डोलासेतुना

गेह्ल् चौरीसः । (१५–६–०५)

कर्णप्रयागात् १३–६–०५ दिनेऽह्नि ३ घण्टा वादनसमये निर्गतोऽहमद्य सायं पञ्चघण्टावादनसमये ऽत्र समागतोऽस्मि ।

कर्णप्रयागाद्धरिद्वारं प्रति कश्चन मार्गो वर्तते, येनैव पूर्वं वयं हरिद्वारात्कर्णप्रयागादिमार्गेण बदरिकाश्रमं गतास्स्मः । बहवो जनास्तेनापि मार्गेण हरिद्वारं गत्वा निजं निजं स्थानं यान्ति । अधिक संख्यास्त्वनेनैव मार्गेण, येन वयमत्रागतास्स्मः, काठगोदामं गत्वा तत्र बाष्पशकटमारोहन्ति । हरिद्वारमार्गस्यास्य च तुल्यदैर्घ्यत्वे ऽप्यारोहणाव रोहणादेरत्र मार्गेऽल्पतया सुगमत्वमभिमन्यमाना अधिकसंख्या जना अनेनैव प्रतिनिवर्तन्ते स्वदेशान् । वयन्तु मार्गस्य सुगमत्वादिकमिवैकदा दृष्टमार्गा पेक्षया नवीनेनादृष्टेन मार्गेण प्रतिनिवर्तने क्रियमाणेऽदृष्ट पूर्वाणा स्थलानां दर्शनेन मनसो ह्लादादिकमपि स म्भावयन्तोऽनेन मार्गेण प्रतिनिवर्त्तामहे ।

कर्णप्रयागाद्धरिद्वारगामी मार्गो दक्षिणपश्चिमेन प्रवर्तते, काठगोदाममार्गश्च पूर्वदक्षिणेनेति पूर्वदक्षिणा मुखा वय कर्णप्रयागात्प्रातिष्ठामहे ।

कर्णप्रयागात् १३—६—०५ दिने ३ घण्टा काले प्रस्थितोऽहं सायं सार्धपञ्चघण्टाकाले पञ्चार्धक्रोशे वर्तमानां सिरौलीचट्टीं प्राप्य तत्रैव रात्रिमयापयम् ।

कर्णप्रयागादारभ्यार्धक्रोशसूचकप्रस्तरखण्डा निखाता स्सन्ति मार्गपार्श्वभागे । तेषु च कर्णप्रयागादारभ्यैवैकद्व्यादिक्रमेणार्धक्रोशाङ्का उत्कीर्णास्सन्ति, न पुन र्हरिद्वाराद्वा बदरिकाश्रमाद्वा दूरसूचकाङ्काः । अत एवाहमपीतो दूरविलेखनस्थलेषु कर्णप्रयागादारभ्यैव दूरसूचकार्धक्रोशाङ्कान् लेखिष्यामि ।

मध्ये मार्गञ्च कर्णप्रयागात् ।।अर्धक्रोशे, ।।।अर्धक्रोशे १ अर्धक्रोशे च निर्झराः, २ अर्धक्रोशे काचन गुहा निर्झरश्च महानेकः, २।। अर्धक्रोशे एको निर्झरः, ३।।। पादोनचतुरर्धक्रोशे सेमल्चट्टी च सन्ति ।

सेमल् चट्टी समीपे ।।अर्धक्रोशदीर्घा समभूमि रस्ति । चट्ट्यांच पञ्चषा दृढा गृहाः, काचन राजकीय धर्मशाला, कश्चन निर्झरश्च सन्ति । आवश्यकतमाश्च सर्वे पदार्था लभ्यन्तेऽत्रापणे ।

चट्टीसमीप एव पिण्डारकनद्या आदियदरी (आटा गाड़ ) नाम्न्या नद्याश्च सङ्गमो भवति । इयमेव पिण्डारकनदी कर्णप्रयागं गता कर्णगङ्गाशब्देन व्यवह्रि

वर्तते। कर्णप्रयागात्सेमलचट्टीपर्यन्तं मार्गोऽस्या एव नद्या वामेन तीरेण प्रवर्तते।

कर्णप्रयागात्सार्धक्रोशचतुष्टये आदिबदरीनद्या उपर्ययोमयो डोलासेतुरस्ति। तेन तामुत्तीर्य तस्या दक्षिणेन तीरेण गन्तव्यं भवति।

सङ्गमस्थानसमीप एव कश्चनान्यो मार्ग आरभ्यते यः पिण्डारकनद्या वामेन तीरेण 'नारायणबगड' स्थानं प्रति याति।

आदिबदरीनद्युत्तरणानन्तरं पर्वतारोहणं प्रवर्तते, सुदूरमनुवर्तते च। ५ अर्धक्रोशे कश्चन जलप्रपात, सार्धपञ्चमे निर्झरद्वयम्, षष्ठे च 'सिरौली' चट्टी वर्तते।

चट्टयां पञ्चपास्तृणाच्छन्ना गृहा एकोऽल्पीयाग्निशरश्च सन्ति। आदिबदरीधाधः प्रवहन्त्यपि चट्ट्याः पर्वतमध्यभागे वर्तमानत्वान्नोपकरोति जनानां मा। नद्या एकस्मिन् तीरे सिरौली चट्टी अन्यस्मिन् तीरे च ग्रामा नातिदूरे सन्ति। चट्टीस्थानां पार्श्वान्तरस्था ग्रामा रामणीयकेन मनोहरन्ति। ग्रामे वाद्यमानानां वाद्यानां शब्दाश्च चट्टीस्थैस्सम्यक्छ्रूयन्ते।

१४–६–०५ दिने प्रातः पञ्चघण्टाकाले सिरौली चट्टीतो निर्गतोऽहं ७॥ घण्टाकाले आदिबदरीचट्टीं कर्ण प्रयागात् ११॥ अर्धक्रोशदूरस्थां प्रापम्, सर्वं चाह्निक कृतं तत्रैवाकरवम् ।

मार्गमध्ये च ६॥ अर्धक्रोशे कश्चन निर्झरः, ७। मे कश्चिदल्पीयान्निर्झरः, ७॥ मे भटौली चट्टी, ८॥ मे कश्चिदल्पो निर्झरः, ९। मे प्रस्रवणद्वयम्, ९॥ मे अल्पं प्रस्रवणद्वयम्, १०॥मे पौर्वी प्रति कश्चन मार्गः, प्रस्रवणद्वयञ्च सन्ति ।

भटौलीचट्ट्यां एकस्तृणच्छन्न आपणः प्रस्रवण द्वयं अश्वत्थवृक्षौ द्वौ च सन्ति। सर्वतश्च महद्वनमास्ते, यत्राभ्रंलिहा महान्तो वृक्षास्सन्ति ।

सेमलीचट्टीसमीपे आदिबदरीनद्युत्तरणानन्तर मेवारब्धं पर्वतारोहणं १० दशमार्धक्रोशपर्यन्तमास्ते। तत एवावरोहणम् ।

आदिबदरीचट्ट्यामुपद्वादशाः सन्त्यापणाः । राज कीया काचन धर्मशालाप्यस्ति । पत्रप्रस्थापनशाला च ( Post Office ) वर्तते । समीप एव प्रवहत्यादि बदरीनदी । मनोहरति स्थलरामणीयकम् । क्षेत्रखण्डा श्चोर्वरास्सन्ति बहवः ।

चट्टीसमीप एव आदिबदरीनाथस्यास्त्यालयः। तस्य परितोऽन्येऽपि सन्ति त्रयोदशालयाः । आहत्य चतु र्दशालयाः तत्र दृश्यन्ते। तेषु च (१) आदिबदरीनाथः, (२) वृद्धकेदारेश्वरः, (३) गरुडः, (४) परमब्रह्म, (५) गोकुलस्वामी, (६) पार्वती, (७) अन्नपूर्णा, (८) महिषमर्दिनी, (९) गणपतिः, (१०) सत्यनारा यणः, (११) लक्ष्मीनारायणः, (१२) चक्रपाणिः, (१३) परशुरामः, (१४) हनूमानित्येषां मूर्तयः सन्ति।

तस्मिन्नेव दिने २ घण्टाकाले आदिबदरीचट्टीतः प्रस्थाय सूर्येऽस्तं गते सप्तमघण्टाकाले " कालामाटी चट्टीं " प्राप्य तत्रैव रात्रिमयापयम् ।

आदिबदरीचट्या नातिसमीप एव पर्वतारोहण मारभ्यते । तत्र १२ तमेऽर्धक्रोशे । तत्रैव द्वयो र्गिरिनद्योस्सङ्गमश्च भवति । १३।। तमे च पञ्चष कुट्यात्मिका काचन चट्टी वर्तते । १३।।। तमे कश्चन निर्झरः, १४|| तमे त्रीणि प्रस्रवणानि, काचन चट्टीच सन्ति

१६ षोडशेऽर्धक्रोशे कठिनतरं पर्वतारोहणमारभ्यते। बदरिकाश्रमगमनसमये ' बिजनी चट्टी ' समीपे या

ईदृशं पर्वतारोहणं दृश्यते नादृशमिदमपीति वक्तु शक्यते।

१६॥ तमेऽर्धकोशे "झाँकापानी चट्टी" वर्तते। तत्र द्विसास्सन्ति कुट्यः, एकश्चापणः, सुदूरादानीता काचन सूक्ष्मा जलधारा च पतति। इतश्च पर्वता रोहण काठिनतम सम्पद्यते।

• अष्टादशेऽर्धकोशे पर्वतारोहणं समाप्नोति, मध्ये च प्रस्रवणानि द्वित्राणि सन्ति। १८। तमे काचन चट्टी कुटीरद्वयात्मिका वर्तते, १८॥ तमे "काला माटी चट्टी" वर्तते, अत्रापि दीर्घास्तिस्रः कुट्यो द्वौ चापणौ सन्ति, जलधारा चैका पतति।

एतस्मिन् दिने यावानस्माभिश्श्रमोऽनुभूतो न तावानन्यस्मिन् कदाचिदपि। प्रतिदिन सुदूरयात्रया शिथिलगात्राणामस्माकमेव तथा श्रमाधिक्योपल म्भो वा सर्वेषामेव मार्गकाठिन्येन तथा भवति इति निश्चेतु न प्रभवामो वयम्। घण्टाद्वयकाले आदि बदरीचट्टीतो निर्गतानामस्माकं ६॥। अर्धकोशमात्र वर्तिन्याः कालामाटी चट्ट्याः प्राप्तौ पञ्चघण्टा अतीता इत्यनेनैव मार्गकाठिन्यमनुमीयताम्।

चट्टीसमीप एव आदिबदरीनाथस्यास्त्यालयः। तस्य परितोऽन्येऽपि सन्ति त्रयोदशालयाः । आहत्य चतुर्दशालयाः तत्र दृश्यन्ते। तेषु च (१) आदिबदरीनाथः, (२) वृद्धकेदारेश्वरः, (३) गरुडः, (४) परमब्रह्म, (५) गोकुलस्वामी, (६) पार्वती, (७) अन्नपूर्णा, (८) महिषमर्दिनी, (९) गणपतिः, (१०) सत्यनारायणः, (११) लक्ष्मीनारायणः, (१२) चक्रपाणिः, (१३) परशुरामः, (१४) हनूमानित्येषां मूर्तयः सन्ति।

तस्मिन्नेव दिने २ घण्टाकाले आदिबदरीचट्टीतः प्रस्थाय सूर्येऽस्तं गते सप्तमघण्टाकाले " कालामाटी चट्टीं " प्राप्य तत्रैव रात्रिमयापयम् ।

आदिबदरीचट्ट्या नातिसमीप एव पर्वतारोहण मारभ्यते । तथ १२ तमेऽर्धक्रोशे । तत्रैव द्वयो र्गिरिनद्योरसङ्गमश्च भवति । १२।। तमे च पञ्च कुट्यात्मिका काचन चट्टी वर्तते । १३।। तमे कश्चन निर्झरः, १४।। तमे त्रीणि प्रस्रवणानि, काचन चट्टीच सन्ति

१६ षोडशोऽर्धक्रोशे कठिनतरं पर्वतारोहणमारभ्यते। बदरिकाश्रमगमनसमये ' बिजनी चट्टी ' समीपे या

दृशं पर्वतारोहणं दृश्यते तादृशमिदमपीति वक्तुं शक्यते ।

१६॥ तमेऽर्धक्रोशे "ओंकापानी चट्टी" वर्तते । तत्र द्विसारसन्ति कुट्यः, एकश्चापणः, सुदूरादानीता काचन सूक्ष्मा जलधारा च पतति । इतश्च पर्वतारोहणं कठिनतमं सम्पद्यते ।

अष्टादशेऽर्धक्रोशे पर्वतारोहणं समाप्नोति, मध्ये च प्रस्रवणानि द्वित्राणि सन्ति । १८। तमे काचन चट्टी कुटीरद्वयात्मिका वर्तते, १८॥ तमे "काला माटी चट्टी" वर्तते, अत्रापि दीर्घास्तिस्रः कुट्यो द्वौ चापणौ सन्ति, जलधारा चैका पतति ।

एतस्मिन् दिने यावानस्माभिश्श्रमोऽनुभूतो न तावानन्यस्मिन् कदाचिदपि । प्रतिदिनं सुदूरयात्रया शिथिलगात्राणामस्माकमेव तथा श्रमाधिक्योपलम्भो वा सर्वेषामेव मार्गकाठिन्येन तथा भवति वेति निश्चेतुं न प्रभवामो वयम् । घण्टाद्वयकाले आदि बदरीचट्टीतो निर्गतानामस्माकं ६॥। अर्धक्रोशमात्रवर्तिन्याः कालामाटी चट्ट्याः प्राप्तौ पञ्चघण्टा अतीता इत्यनेनैव मार्गकाठिन्यमनुमीयताम् ।

चट्टीसमीप एव आदिबदरीनाः
रितोन्येऽपि सन्ति त्रयोदशालय।
देशालयाः तत्र दृश्यन्ते। तेषु च (१) •
(२) वृद्धकेदारेश्वरः, (३) गरुडः, (४
(५) गोकुलस्वामी, (६) पार्वती, (७,
(८) महिषमर्दिनी, (९) गणपतिः, (१०)
रणः, (११) लक्ष्मीनारायणः, (१२) •
(१३) परशुरामः, (१४) हनूमानित्येषा मूर्तय

तस्मिन्नेव दिने २ घण्टाकाले आदिबदरी
प्रस्थाय सूर्येऽस्त गते सप्तमघण्टाकाले " काल•
चट्टीं " प्राप्य तत्रैव रात्रिमयापयम् ।

आदिबदरीचट्ट्या नातिसमीप एव पर्वतारोहण
मारभ्यते । तथ १३ तमेऽर्धकोशे । तत्रैव द्वयो
र्गिरिनद्योस्सङ्गमश्च भवति । १३॥ तमे च पञ्च
कुट्यात्मिका काचन चट्टी वर्तते । १३॥। तमे कश्चन
निर्झरः, १४॥ तमे त्रीणि प्रस्रवणानि, काचन चट्टीच
सन्ति

१६ षोडशेऽर्धकोशे कठिनतर पर्वतारोहणमारभ्यते।
बदरिकाश्रमगमनसमये ' बिजनी चट्टी ' समीपे या

व्यासचट्टग्रामेवाह्निकं सर्वं निर्वत्य ततः ३॥ घण्टावसरे प्रस्थिता वयं सायं पञ्चघण्टाकाले मेहल् चौरीमभजाम । मध्येमार्गं च बह्वो निर्झरा एको ग्रामश्चादृश्यन्त ।

मेहल्चौर्यां रामगङ्गानदी प्रवहति । नद्या उभयो स्तीरयोराहल्लोपपञ्चदश गृहास्सन्ति, नगररक्षण सैनिकशाला ( Police Station ) पत्रनिक्षेपाय काचन मंजूषा ( Letter Box ) च स्त 1

हरिद्वाराद्यात्रिणां ' झम्पान ' वहनाय 'कण्डी' वहनाय च सहागता भृतिजीविन इत एव प्रतिनि वर्तन्ते निजान् गृहानितीयं स्थितिः । इतः काठ गोदामपर्यन्तं झम्पानादिवहनायान्ये भृतिजीविनो नियम्यन्ते । अश्वाश्च भारवहा मनुष्यारोहणयोग्या श्चात्र लभ्यन्ते । प्रायस्सर्वेऽपि यात्रिणो भारवहनाया श्वानेव गृह्णन्ति स्वयं चाश्वैर्गच्छन्ति । मेहल्चौरी पर्यन्तः प्रदेशः ' गढ़वाल् ' ( Garhwal ) मण्डला न्तर्गतः ( District ) ततः परस्ताच ' कमायूं ' ( Kumaon ) मण्डलं प्रवर्तते । अत एव च हरिद्वार त्समागता भारवाहिनोऽन्ये च गढवाल् मण्डलवासिन इत एव प्रतिनिवर्तन्ते ।

मेहल् चौरीतः काठगोदामपर्यन्तं ३२०० (Ma und) तोलकपरिमितस्य भारस्य वहने भृतिः किञ्चि न्न्यूनाधिकभावेन षड्रूप्याणि भवन्ति । एकैकस्मिन् भारवाहिभ्यश्चे ६४०० (2maunds) तोलकपरिमित भारमारोपयन्त्यधिकद्रव्याशया । मनुष्यारोहणोपयो गिनामश्वानां भृतिश्चाश्वगुणतारतम्यानुरोधेन षड् रूप्येभ्य आरभ्य दशरूप्यपर्यन्ता भवति ।

पूर्वोक्त नियममनुसृत्यास्माभिरप्युत्सृष्टपूर्वतन कण्डीवाहिभिर्भारवहनाय द्वावश्वौ परिगृहीतौ । कश्चिदाधिकारिकः पुरुषोऽत्रस्थो भारस्वामिनाम भार वाह्यश्वपालनाम भारपरिमाणादिकं विलिखति पुस्तके कस्मिंश्चित् । ददाति च चीटिकां काञ्चिद्भारस्वामिने ।

कर्णप्रयागादारभ्य मेहल्चौरीपर्यन्तो भूमिभागो मनुष्याणां शारीरानारोग्यहेतुः, नानाविध रोगैः पीड्यन्ते ऽत्रत्या जनाः, वातरोग एवाधिकपरिमाणः, सम्यग्भुक्तस्यान्नादेः परिपाको न भवति । बदरि काश्रमयात्रिण इत एव सम्पादयन्ति रोगान्नानाविधान् यैस्स्वदेशं गताश्चिरं परिपीड्यन्ते । अतश्चात्र साव धानैर्भाव्यं यात्रिभिः ।

च काचिदस्ति । वामे तु तीरे सन्ति विंशत्यधिका गृहाः काष्ठोपलादिभिर्दृढं निर्मिताः । सर्वेच पदार्था आपणेष्वत्र लभ्यन्ते । पार्वताश्च चामरकम्बलशिला रसभस्मयो विशेषतोऽल्पमूल्येन ।

रामगङ्गाया मध्ये प्रवहन्त्या उपरि कञ्चनायोमयो डोलासेतुरस्ति (७७) सप्तसप्ततिहस्तदीर्घः । ग्रामात् ॥ अर्धक्रोशदूरेऽस्त्यौषधालयः कश्चिद्राजकीयः ।

ग्राममध्यात् द्वौ मार्गौ प्रवर्तेते । तत्रैको दक्षिण पश्चिमतो मुरादाबादनगरं याति, अन्यश्च पूर्वदक्षिणतः काठगोदामम् । मार्गविभागस्थाने किञ्चिदस्ति प्रकटन फलकं स्तम्भावलम्बितम् । तत्रैवं लिखितमस्ति—

"To Panuakhal 7½ Miles
To Massi 71 Miles [ North west]
To Dwar Hat 10½Miles"

—इति ।

पूर्वं प्रायेण सर्वेऽपि रामनगरमार्गेण मुरादाबाद् नगरं गत्वा तत्रैव धूमशकटमारोहन्त आसन् । अद्य तु सर्वे काठगोदाममार्गमेवाश्रयन्ते ।

ये यावत् मुरादाबाद् नगरं गच्छन्ति तेषां मध्ये मार्गमेतानि स्थानानि दृष्टिपथमुपयान्ति—

एव कश्चन ग्रामश्च सन्ति। नातिदूर एव कश्चनान्योऽपि ग्रामोऽस्ति। २६। ततो कश्चन महानापणोऽस्ति। २६॥ ततो मार्गद्वयं विभक्तं वर्तते। तत्र किञ्चित्प्रकटनफलक मस्ति स्तम्भे संसज्जितम्। तत्र च ' Kalni ८॥। Miles ' इत्यस्ति लिखितम्। २० ततो चाहित चौखुटियाग्रामः।

अयमेव चौखुटियाग्रामो गनायीत्यपि व्यवह्रियते। मेहल्चौर्या परित्यक्ता रामगङ्गानदी पुनरत्र प्रव हन्ती दृष्टिपथमुपयाति। सुमहती समभूमिरत्र दरीदृश्यते। फलन्ति सस्यानि नानाविधान्यत्र क्षेत्र खण्डाः। क्षेत्रेषु मध्ये मध्ये रामगङ्गानदीतस्समानीताः कुल्याः प्रवहन्ति कुर्वन्त्य उर्वराणि क्षेत्राणि। रमणीयोयं भूभागो हरति मनो निर्जन स्वभावरमणीयभावेन। बलादिवात्र वस्तुमुत्कण्ठा समुपजायते मानसे, स्थले ऽस्मिन् दृष्टे। तिष्ठन्त्वन्ये, मम पुनर्मनस्स्थलमिदं परित्यज्य प्रस्थातुं न काङ्क्षत इति सत्यं भणामि।

रामगङ्गाया दक्षिणभागे सन्ति पञ्चषा गृहा आप णाश्च। राजकीयपत्रप्रस्थापनशाला ( Post Office )

च काचिदस्ति । वामे तु तीरे सन्ति विंशत्यधिका गृहाः काष्ठोपलादिभिर्दृढं निर्मिताः । सर्वेच पदार्था आपणेष्वत्र लभ्यन्ते । पार्वताश्च चामरकम्बलशिलारसप्रभृतयो विशेषतोऽल्पमूल्येन ।

रामगङ्गाया मध्ये प्रवहन्त्या उपरि कश्चनायोमयो दोलासेतुरस्ति (७७) सप्तसप्ततिहस्तदीर्घः । ग्रामात् ॥ अर्धक्रोशदूरेऽस्त्यौषधालयः कश्चिद्राजकीयः ।

ग्राममध्यात् द्वौ मार्गौ प्रवर्तेते । तत्रैको दक्षिण पश्चिमतो मुरादाबादनगरं याति, अन्यश्च पूर्वदक्षिणतः काठगोदामम् । मार्गविभागस्थाने किञ्चिदस्ति प्रकटन फलकं स्तम्भावलम्बितम् । तत्रैवं लिखितमस्ति—

" To Panuakhal 7½ Miles
To Massi 71 Miles [ North west]
To Dwar Hat 10½ Miles "

—इति ।

पूर्वं प्रायेण सर्वेऽपि रामनगरमार्गेण मुरादाबाद् नगरं गत्वा तत्रैव धूमशकटमारोहन्त आसन् । अद्य तु सर्वे काठगोदाममार्गमेवाश्रयन्ते ।

ये यावत् मुरादाबाद् नगरं गच्छन्ति तेषां मध्ये मार्गमेतानि स्थानानि दृष्टिपथमुपयान्ति—

| चौखुटियातः कोशाः । | स्थाननामानि । |
|---|---|
| ४ | चौपट्टा, |
| ८ | बुढाकेदार<br>वृद्धकेदारः |
| ११ | भिकीसैन, |
| १७ | गर्वानी, |
| २३ | मोहनचौली, |
| २७ | रमाया आलयः, |
| २८ | गिरिजाचट्टी, |
| ३५ | रामनगरम्, |
| ६५ | मुरादाबाद्, |

रामनगरमेव 'चिल्किय' त्यपि व्यवह्रियते । रामनगरपर्यन्तमेव च पार्वतः प्रदेशः । ततः परं च समभूमिरेव । रामनगरे च वृषभशकटा अश्वाश्च वाहनानि लभ्यन्ते मुरादाबाद् नगरगमनाय ।

यद्यपि गनाईतः काठगोदामनगरं किञ्चिन्न्यूनाधिकभावेन ७० सप्तत्यर्धकोशदूरे वर्तते, मुरादाबाद् नगरं च ततोऽधिकदूर इति काठगोदाममार्गेणैव सर्वेषां स्वदेशगमनमुचितम्, अथापि केचिद्रामनगरे शकटादि वाहनलाभमालोचयन्त एतेन मार्गेण यान्ति ।



बदरिकाश्रमे श्रीबदरीनारायणस्यालय. ।

यस्तुतस्तु रामनगरे शकटादिवाहनलाभेऽपि ताव त्पर्यन्तयात्रैव कष्टतमा, मार्गस्यापरिष्कृतत्वात्, मार्ग मध्ये ऽपेक्षितपदार्थानां दुर्लभत्वात्, समीचीनस्थाना लाभाच; काठगोदाममार्गस्य, सम्यकपरिष्कृतत्वात्तत्र तत्रापणादिसद्भावाच स एव मार्गस्सुगम इति मन्यामहे।

ये पुनर्मुरादाबादप्रान्तवर्तिनो लोभाक्रान्ता धन व्ययन्यूनताभिलाषिणः परिश्रमसहाश्च तेषां काम मुचितमेव रामनगरमार्गावलम्बनम्, अन्येषां तु काठ गोदाममार्गाश्रयणं युक्तमुत्पश्यामो वयम्। अत एव चेदानीं प्रायोऽधिकसङ्ख्या जनाः काठगोदाममार्गमेवा श्रयन्ते ।

हल्द्वानीतः । २०-६-०५

गनायीतः १६-६-०५ दिने ३॥ घण्टाकाले निर्गत्याद्य द्वादशघण्टाकालेऽत्रागतोऽस्मि । गनायी ग्रामश्च कर्णप्रयागात् ३७ अर्धक्रोशदूरे वर्तत इति पूर्वमेव लिखितम् ।

१६-६-०५ दिने गनायीग्रामे स्नानसन्ध्या भगवदाराधनादिकं निर्वर्त्य ३॥ घण्टाकाले ततो निर्गतस्सायं ५॥ घण्टाकाले महाकालषष्ठीमगमम्।

च वस्त्रपात्रप्रभृतयस्सर्वे पदार्थाः क्रय्या दृश्यन्ते । राजकीयपत्रप्रस्थापनशाला ( Post Office ) औ षधशाला नगररक्षणसैनिकशाला (Police Station) च सन्ति । ग्रामस्य वामपार्श्वे किञ्चित्सरस्स्वच्छस्वादु पानीयं कमलषण्डमण्डितं भास्ते । चामरशिलारस प्रभृतय.पार्वत पदार्था अत्र स्वल्पमूल्येन लभ्यन्ते । ग्राममध्यात्कश्चन मार्गस्सोमेश्वरस्थानं प्रति याति । मार्गारम्भ एव किञ्चित्फलकं स्तम्भावसज्जित मास्ते । तत्र च 'Someshwar 13 Miles. Rani Kheth 12⅝ Miles' इति लिखितं वर्तते ।

दूरे च चतुर्विंशं पर्वतनितम्बेषु बहवो ग्रामा इतो ऽवलोक्यन्ते । बहवश्च देवालयास्तत्र तत्रात्यल्पपरि माणा अवलोक्यन्ते ।

५०। तमेऽर्धक्रोशे एककुटीरात्मिका काचन चट्टी निम्नभागे वर्तते । जलसौख्यमत्र नास्ति ।

५१। तमेऽर्धक्रोशे एकगृहात्मिका काचन चट्टी वर्तते । गृहञ्च दृढ खर्पराच्छन्नम् । सुदूरादानीता काचन सूक्ष्मतमा पङ्किलजलधारा पतति ।

५२॥ तमेऽर्धक्रोशे मार्गपार्श्वे कश्चिज्जलकुण्डो वर्तते। स चोपरि केनचिन्मण्टपेनाच्छन्नोऽस्ति । जलञ्च शीत स्वादु च ।

५३ तमेऽर्धक्रोशे 'बगवाली पोखर चट्ट्यास्ते । स्थानावलोकनेन ' बागवाली पोखर चट्टी ' त्येव नाम्ना भाव्यम् , ' बगवाली ' ति त्वशुद्धमित्यस्मामत । ' बागवाली पोखर चट्टी ' त्यस्य उद्यानवती पुष्करिणी चट्टीत्यर्थः। वस्तुतोऽत्र किञ्चिदुद्यान द्वे च पुष्करिण्यौ स्त इति नामेद समुचितमस्य स्थानस्य । उपदशा गृहा अत्र सन्ति दृढाः, राजकीयपत्रप्रस्थापनशालापि ( Post Office ) काचिदत्र वर्तते । बहवश्चापणा अत्र सन्ति ।

द्वाराहाट् चट्टीप्रभृत्येतावत्पर्यन्त मार्गः काचि न्निम्न कचिदुच्चश्चास्ते । चीडनामका वृक्षा विशेष- तोऽत्रोपलभ्यन्ते । एतन्मध्ये चावासाय समीचीनं

स्थानं कुत्रापि नास्ति । अत एव वयमप्येतावद्दूर मेकपदेनागतास्स्मः ।

१८—६ —०५ दिनस्य ब्राह्ममुहूर्त एव ' बग वाली पोखर चट्टीतः प्रस्थाय ९।। घण्टाकाले शीतळा चट्टीमभजम् । निरवर्तयञ्च सर्वमह्नि कर्तव्यम् ।

मध्येमार्गं च ५४। तमेऽर्धक्रोशे 'वांसुरीसेराचट्टी वर्तते । समीप एव ' गगास ' नदी प्रवहति । अस्यास्सेतुः ८५ पाददीर्घोऽयोमयश्च । चट्टयां पञ्चपा स्सुधोफलादिनिर्मिता गृहा आपणाश्च सन्ति । कस्या श्चिद्देव्या अल्पीयानालयश्च । प्रस्रवणं किञ्चिदास्ते ।

सेतुसमीप एव पर्वतारोहणं प्रवर्तते ।५४।। तमे द्वेधा विभज्यते मार्गः, एकश्च वामतो गच्छन् अल्मोडा नगरं प्रतियाति । अल्मोडानगरञ्च मार्गविभागस्थानात् १८।। अर्धक्रोशाद्दूरे वर्तते । मार्गविभागस्थाने स्तम्भाव सज्जितं किञ्चित् द्विमुखं प्रकटनफलकमास्ते । तत्रेदं सर्वमस्ति लिखितम् ।

अस्मदनुयायिषु द्वौ सर्वेभ्यः पूर्व मेव निर्गता वपरिचिताग्लाक्षरौ, अनयलोकितप्रकटनौ वा अल्मोडा मार्गमाश्रित्याचलताम् । वयन्तु तौ पुरतः पुरतो यात इति मन्यमानास्तूर्ष्णीं निजकार्यव्यापृता अभमाम ।



बदरिकाश्रमे ब्रह्मकपालः।

स्वतो मन्दप्रकृत्योः, प्रतिदिनं पूर्वं प्रस्थितयोरपि पश्चा देव सर्वेषां निवेशमागच्छतोर्मध्येमार्गं विश्रम्य वि श्रम्य यात्रां कुर्वतोस्तयोश्चिरस्यापि मार्गमध्येऽदर्शनेन शङ्किता वयमभूम । अल्मोडामार्गेण गमने यद्यपि तस्य मार्गस्या ऽल्मोडामतिक्रम्य पुनरप्येतेन मार्गेण सङ्गमादस्माभिस्सह सङ्गमो नूनं भवेत् । तथापि शिरोवेष्टनेन नासिकास्पर्शवन्मार्गस्यास्यातिभ्रामिमुक्त तया दिनद्वयानन्तरमेवास्मन्मार्गप्राप्तिस्तयोरसम्भ वेदिति महान्परिश्रमस्स्यात् । अधिकावशेषायामेव यामिन्यामस्माकं प्रस्थितत्वाद्वनमार्गेऽस्मिन्पथिकानां दर्शनं नैव सम्भावितमस्मिन् समये, यन्मुखेन निजो भ्रमस्ताभ्यामवगम्येत । असत्योदितभूयिष्ठे भगवति भास्करे यस्मात्कस्माच्चित्पथिकादवगतमार्गभ्रमौ मार्गात्तस्मात्प्रतिनिवृत्तौ तौ कथंकथंचिदपराह्न एव शीसव्याघट्टीमभजताम् । एतावद्दूरं विलेखनस्य किं फलमिति चेत् ? पथिकैस्सर्वदा जागरूकैः पुनः पुनः प्रश्नपरैस्साशङ्कैश्च भाव्यमत्र मार्गे इति बोधनमावश्यक मित्यभिप्रायेणैवमलिखाम वयम् ।

५५। तमेऽपक्रोशे मलयनदीचट्टी वर्तते । तत्र मलयनद्या गंगासनद्याश्च सङ्गमो भवति । उभयोरपि

नद्यो स्तः सेतू पद्यपाश्च सन्ति गृहा आपणाश्च । इतः पुनरपि पर्वतारोहणं प्रवर्तते । ५८। ततोऽर्धक्रोशे पर्वतारोहणसमाप्ति र्भवति । सङ्गच्छते च मार्गः शकट मार्गेण । शकटमार्गश्चायं राणिखेत् सेनानिवेशाद ल्मोडानगरं याति । इत आरभ्य कियद्दूरं शकटमार्गेणैव गन्तव्यं भवति ।

५८॥ ततो र्धक्रोशे मजखली चट्टी वर्तते । चट्ट्या मत्रैकं गृहमेक आपणो बहवो वृक्षाश्च सन्ति । सम तला भूमिश्च परितोऽवलोक्यते । प्रस्रवणं च नातिदूरे किञ्चिदास्ते । चट्टीतः पादक्रोशदूरे काचन धर्मशाला ऽऽस्ते,। तस्याश्च समीपे उन्नतमे स्थाने सेनानिवेशस्थान मास्ते । इतो राणिखेत् सेनानिवेशः ८। अर्धक्रोशदूरे, अल्मोडा नगरञ्च १४॥ अर्धक्रोशदूरे तिष्ठतः ।

मजखली चट्टीत आरभ्य मार्गस्योभयोः पार्श्वयोः चीड्प्रभृतीनां वृक्षाणां घनं वनऽमवलोक्यते । चट्टीः परित्यज्यान्यत्राग्न्युत्पादने राजकीयवनविभागाधिकृतैः प्रतिषिद्धमास्ते । प्रतिवत्सरं बहुधनस्य काष्ठादि विक्रयादिना राजकीयानामायो भवति ।

६१ ततोऽर्धक्रोशे त्रिमुखो भवति मार्गः। एको राणिखेतस्थानम्, अन्योऽल्मोडानगरं याति, अन्यश्चा स्मद्गमनसाधनीभूतः। मार्गविभागस्थाने अर्धक्रोश सूचक उपलो निखातोऽस्ति। तत्र च (Almora 18 Miles, Rani Khoth 11 Miles) इति लिखितं वर्तते।

६२॥ ततोऽर्धक्रोशे द्वारसूं पट्टी वर्तते। पर्वता रोहणारम्भश्च। ६३॥ ततः 'बाणचट्टी' कुटीर चतुष्टयात्मिका। नदी चैका प्रवहति समीपे चट्ट्याः। पर्वतारोहणं चारभ्यते। ६४॥ ततः आरोहणसमाप्ति र्भवति। समश्चैतो मार्गः। ६७ अर्धक्रोशे पुनः पर्वता रोहणा रम्भो भवति। ६७। ततः तन्त्रीस्तम्भो दृश्यते। ६८। ततः च दीवलापट्टी वर्तते।

दीवलापट्टी तावत् चीडवृक्षवनमध्यभागे पर्वत शिखरे वर्तते, एकं हट्टं गृहम्, द्वे कुट्यौ दीर्घे एक आपणश्च सन्ति। सुदूरादानीता वायन जलधारा सूक्ष्मतमा पतति गोमूत्रधारासमाना। महद्देवात्र जलकष्टमनुभूयते जनैः।

अस्माभिरत्रानुभूतं लिखामस्संग्रहेण । परश्शतं जना अस्मदागमनानन्तरं क्रमेणात्रागत्य कुल्यो न्यविशन् । जलधारा चैका सूक्ष्मतमा । दशसु निमेषे ष्वेको घटः पूर्यते । सर्वे चापेक्षन्ते जलम् । कश्चि त्स्नातुमिच्छति, अन्यो दन्तान् धावयितुम्, अपरश्च वस्त्र धावनमभिलषति । कथमेकदा सर्वेषामभिलषितानि पूर्येरन् ? अस्तु, कथं कथंचिद्भोजनादिकं निरवर्तत । एतावतैव सूक्ष्मा सापि जलधारा व्यनश्यत् । एकघट मात्रजलमवशिष्यतेऽस्मन्निकटे । तेनैव पाकपात्र शोधनं कार्यम् । अशक्यमिदमिति विचारयत्स्वस्मासु कश्चिदाह— समीप एव किञ्चिदस्ति मलवणम् , तत्र गम्यतामिति । तिमिरेण चाक्रान्तासु दिशासु घनेऽत्र वने को वा गच्छतु । कथं कथंचिदवष्टब्धधैर्या वयं द्वित्रा गृहीतदर्पणदीपा अगच्छाम । अश्रूयत च जलशब्दो ऽस्माभिः । सन्तोषेण च पदं न्यधायि हृदये । एता वतैव किमिदमापतितम् ? सिंहशब्दोऽश्रूयत समीप एव । एकोऽवदत्— नद्याः परतीरादयं शब्दो ऽनु श्रूयते, तद्गच्छामो विस्रब्धमिति । एतावतैवान्योऽपि सिंहकण्ठरवोऽनुश्रुतः । अयं चैतस्मिन्नेव तीर इति निरचीयत । ततः को वाऽमे पदं निदधातु ? परवशा अलब्धजला एव प्रविनिवृत्ता यथाकर्थचित्सन्ध्यामकर

वाम शिष्टेनैव जलेन । बहवो जना जलाभावेना पथन्त उपावसन् , कः किं करोतु ?

१९-६-०५ दिने कल्य एव शीतलाचट्टीतः प्रस्थितोऽहं १० घण्टाकाले रामगढ् चट्टीं प्राप्य तत्रैवा गत्य मध्याह्नकर्तव्यं निरवर्तयम् ।

शीतला चट्टीतः ६९॥ तमार्धक्रोशपर्यन्तं पर्वता रोहणं कर्तव्यं भवति । ततः कठिनतममवरोहणं प्रवर्तते ।

७१ तमे ७२ तमे चार्धक्रोशे द्वे चट्ट्यौ स्तः । ७२॥ तमे ' कोसला ' नद्यास्ते । कोसलाया उपरि डोलासेतुरयोमयोऽस्ति । कोसलानद्या वामेन तीरेण कश्चिद्याति मार्गोऽल्मोडानगरं प्रति ।

नदीमुत्तीर्णानां कांकरीपाट् चट्टी दृष्टिपथमुपयाति । चट्ट्यामस्यां पद्यपाखुधोपलनिर्मिता गृहा एक आ पणश्च सन्ति । समीप एव मालवणं किञ्चिदास्ते, कोसला नद्याः पानीयं च सुलभमेव ।

चट्ट्यनन्तरमेव चतुर्धा विभक्तो भवति मार्गः । सैन्यिको येन वयं मागताश्च एव । अन्यश्च अल्मोडा गामी १३। अर्धक्रोशदीर्घः, अपरः १२ सार्धक्रोशदीर्घः

खैरनापर्यन्तगामी शकटमार्गः, इतरश्च ६। अर्ध क्रोशदीर्घः पद्यारूपः खैरनागामी च। चतुर्थोऽयं मार्ग एवास्माभिराश्रितः।

'बांसुरी चेरा' चट्टीसमीपाद्विभक्तेन मार्गेण वा, मजखलीचट्टीसमीपाद्विभक्तेन मार्गेण वा ये ऽल्मोडानगरं गच्छन्ति तैरल्मोडातः प्रतिनिवृत्तैरसैव काठगोदाममार्गोऽवलम्बनीयो भवति। मार्गविभाग स्थल एव स्तम्भावलम्बिते कुत्र चिन्प्रकटनफलके "Almora 13½ Miles" इत्यस्ति लिखितम्।

७५ ततोऽर्धक्रोशे 'पढ़ढ़िया' चट्टी वर्तते। द्वित्राश्च गृहास्तृणाच्छन्ना एकश्चापणश्सन्ति।

७७॥ ततोऽर्धक्रोशे यमड़ियाचट्टी द्वित्रकुटीरात्मिका एकप्रस्रवणयुता नदीतीरे दृश्यते।

८० ततोऽर्धक्रोशे खैरना (Khairna) चट्टयास्ते। अत्र चोपविंशात्सुधोपलादिनिर्मिता दृढा गृहा आपणाश्च बहवस्सन्ति। राजकीयपत्रप्रस्थापनशाला (Post Office) नगररक्षणसैनिकशाला (Police Station) च स्तः।



बदरिकाश्रमे श्रीलक्ष्मीभाण्डागारम् ।

चट्टीसमीप एव कोसलानाद्या उपरि महान् कश्चन सेतुरयोमयोऽस्ति। अत्र कोसलानद्या सहान्यस्याः कस्याश्चन नद्यास्सङ्गमो भवति। राणीखेतगामिन स्सेतुना नदीमुत्तीर्य यान्ति। द्वाराहाट् समीपे यो राणीखेतं प्रति मार्गो गतस्सोत्र सन्दृश्यते। इतः कश्चन शकटमार्गः काङ्करी घाट् चट्टी मार्गेणाल्मोडां याति। काठगोदामात्प्रस्थिताश्शकटा "नैनीताल" "खेरना" "राणीखेत" मार्गेण अल्मोडानगरं यान्ति।

खेरनातो राणीखेत् सेनानिवेशः २७ अर्धक्रोश दूरेऽस्माकं पृष्ठभागे वर्तते। इतः काठगोदामं प्रति द्वौ मार्गौ गच्छतः। तत्रैकश्शकटमार्गः ३४ अर्धक्रोश दीर्घः। अन्यश्च निम्नोन्नतः पद्यारूपः २४ अर्धक्रोश दीर्घ एव। अयमपि कियद्दूरपर्यन्तं शकटमार्गरूप एव। परस्तात्तु पद्यारूपः।

वयं तु २४ अर्धक्रोशदीर्घम्मार्गमेवाश्रित्याचलाम। मार्गारम्भ एवार्धक्रोशसूचकशिलाफलको भूमौ निखातोऽस्ति। तत्र च "Kathgodam 34" इत्यस्ति लिखितम्।

८१ तमेऽर्धक्रोशे गरमपानी चट्टी वर्तते द्वित्रगृहात्मिका । खेरनायां कोसलया सङ्गताया वननद्या दक्षिणेन तीरेणायं मार्गो यातीति चट्टयपीयं नदीतीर एवास्ते ।

८२॥ तमेऽर्धक्रोशे राजगढ् चट्टी वर्तते । एकमेव गृहमंशेनापणरूपं वर्ततेऽत्र । रामगङ्गानाम्नी काचि नदी पूर्वोक्तया वननद्या सङ्गच्छतेऽत्र । नद्या उपरि १२० पाददीर्घोऽयोमयस्सेतुरस्ति ।

स्थानस्यात्रातिसंकुचितत्वेऽपि शीवळाचट्टीतः १४ अर्धक्रोशदूरमागता वयं परिश्रान्ता अगत्यात्र कञ्चन कालमतिष्ठाम भगवदाराधनाय ।

राजगढचट्टीतः ३ घण्टाकाले प्रस्थाय सायं ६ घण्टाकाले तलार्कैची चट्टीमभजाम ।

८३॥ तमेऽर्धक्रोशे राजकीयं (P. W. D. Ins pection Bunglow ) अपवरकमस्ति । अत्रैव कश्चि दापणश्चास्ते । इतः कश्चनमार्गो नयिनीताळं प्रत्यष्टार्ध क्रोशदीर्घो याति । अपरश्च रामगढ् नगरं प्रति तावद्दीर्घ एव प्रवर्तते । अस्मद्गमनाधारश्चायं मार्गस्तृतीयः ।

खेरनात एतावत्पर्यन्तं शकटमार्गेणैवागता वयम् । इतः प्रभृति मार्गः पर्वतनितम्बे यास्यति । अतश्च पर्वतस्य मूलभागेनागच्छन्नयं मार्गो नितम्बप्रदेश प्राप्तये वक्राकारेण परिभ्रमति । तेन पाधोटिरिता

कारस्संभवोऽस्ति—




शकटमार्गस्य सुगमत्वेपि मार्गस्य दैर्घ्यांल्लाघवाभिलाषिणा नितम्बदेशमाश्रये ऋजुः पद्यारूपः कश्चन मार्गो निर्मितोऽस्ति । सचायमुपरितने रेखाचित्रे प्रथमाङ्कचिह्नितस्थानात् द्वितीयाङ्कचिह्नितस्थानं यावद्वर्तमानो ऽवलोकयितुं शक्यते। एवं ऋजुमार्गावलम्बनेनार्धक्रोशस्यैकस्य न्यूनता भवति ।

८५॥। समेर्धक्रोशे तलार्कैची चट्टी वर्तते । अ त्रच द्विशालप्रमाणाभा गृहा द्वावापणौ च सन्ति । नदीतीरस्थ येयं प्रदेश इति रमणीयतरः। तलार्कैचीचट्टीत्यस्य ।ध स्तेनर्कैचीचट्टीत्यर्थः ।तेनोपर्यपि काचन कैंचीचट्टी वर्तत इति व्याख्यातम् । शकटमार्गपार्श्वस्थेयं चट्टी ।

तलाकैञ्चीचट्ट्यां रात्रिं यापयित्वा २०-६-०५ दिने कल्य एव ततोऽपि प्रस्थाय ९॥ घण्टाकाले काठगोदाममभजाम।

मध्येमार्गञ्च ८७ तमेऽर्धक्रोशे कैंचीचट्टी वर्तते। एतावत्पर्यन्तं पर्वतनितम्बप्रदेश एव वर्तमानो मार्ग इतः प्रभृति पर्वतशिखरावालम्बी भवति। तेन च मार्ग सेधा वक्रीभूत उपर्युपरि समारोहति। शकटगमन सौकर्याय क्रमोच्चीकर्तुमयमुपायोऽवलम्बितोऽस्ति। मार्गदैर्घ्यह्रासकामानां सौकर्याय ऋजुः कश्चन मार्गो ऋजूच्चो निर्मितोऽस्ति। प्रायः पथिकास्सर्वे एवैनं मार्गमाश्रयन्ते। ऋजुमार्गेणोपर्यारोहतां मध्ये स्थान-द्वये वक्रीभूतश्शकटमार्ग उपलभ्यते। तथा चेदं तत्रत्य मार्गस्य रेखाचित्रम्—



## विवरणम्

१. पर्वतनितम्बस्थो मार्गः,

२. ३. ४. ५. स एव वक्रता गतः क्रमेणोच्चता-
माश्रयन् ।

६ ७. ऋजुमार्गः,

८. पर्वतशिखरस्थो मार्गः,

९. कैंची चट्टी,

ऋजुमार्गेणोपर्यारोहतां शकटमार्गापेक्षया ॥ अर्ध क्रोशदूरस्य लाभो भवति ।

८९॥ क्रमेऽर्धक्रोशे निगलाट् चट्टी द्वित्रकुटीरात्मि काऽऽस्ते । परितश्च समतला भूमिः ।

९२॥ क्रमेऽर्धक्रोशे भिमैलीचट्टी दृश्यते । चट्ट्या मत्र याचन धर्मशाला पश्चिदापणः कुटीरद्वय च सन्ति। मार्गश्चात्र पञ्चमुखो भवति। तत्रैको येन वयमागता स्म एव। अन्यश्च वामेनाल्मोडां प्रतियाति । २५अर्ध क्रोशदीर्घश्चायम् । अपरो नैनीतालमार्गेण काठगो दाम याति । २२ अर्धक्रोशदीर्घोऽय शकटमार्गः । इतरो नैनीताल प्रतियाति निम्नोन्नत आरोहणावरोहण बहुलस्सार्धक्रोशदीर्घः । पञ्चमश्चारोहणावरोहण युत पञ्चार्धक्रोशदीर्घो भीमतालमार्गेण काठगोदामं प्रति गच्छति । अथ मेवास्माभिराश्रितः ।

९२॥ तमेऽर्धक्रोशे राजकीयं टर्पण्टैन् तैलनिर्माण गृहमास्ते। ( Government Turpentın Factory, Bhawali ) । तत्रैव राजकीयवनविभागाधिकृतस्य गृहं किञ्चिद्वर्तते । ( Forest Department, Ninglat Range Office )

९३॥ तमे परसौली चट्टी वर्तते। गृहद्वयमत्रास्ते । ९६। तमे पञ्चपा हट्टा गृहा दृश्यन्ते । रक्षणसैनिकानां निवासस्थानं च समीप एव तिष्ठति ।

९६॥। तमे भीमताल् नामा महान् तटाको वर्तते। तटाकोऽयमेकार्धक्रोशादीर्घः, ॥ अर्धक्रोशविस्तारश्च। ८७ पादगाधः । तटाकस्य परितस्तीरेषु मार्गो गच्छति । तटाकस्य पूर्वतीरे उपविंशानि हट्टाप्यपवरकानि कश्चिद्देवालयो राजकीयौषधशाला च सन्ति । पश्चिमोत्तरभागे दक्षिणपश्चिमभागे चापणादिकमास्ति । तटाके जलं निरोद्धुं बहिर्निष्कासयितुं च सकवाटकं द्वारमस्ति निर्मितम्। पार्वता निर्झरा बहवोऽस्मिंस्तटाके लीना भवन्ति । घर्मे बहव आंग्ला अत्रागत्य निवसन्ति । अन्यत्येष्वपवरकेष्वांग्लानामेवाधिकसंख्यानि ।

इतः प्रभृत्यवरोहणं प्रवर्तते । इदमेव चान्तिममवरोहणम्। काठिनतरं चेदम्। मार्गपार्श्वेषु मन्दाराद्या वृक्षा दृश्यन्ते ।

१००॥। समेऽर्धक्रोशे नयचण्डीचट्टी वर्तते । अत्र काचन धर्मशाला पञ्चषा आपणाश्च सन्ति । १०१॥। समेऽर्धक्रोशे राणीबाग् चट्टी वर्तते । अयोमयेन दोला संयुता कांचन नदीमुत्तीर्य राणीबाग् चट्टीं प्राप्नुवन्ति ।

चट्टीयं समभूमौ वर्तते । इतः परं पर्वतस्य नामापि न श्रूयते । पर्वतपादप्रदेशे प्रतिष्ठितेयं चट्टी । पञ्च आरामा अत्र दृश्यन्ते । नदीत्रयस्याऽत्र सङ्गमो भवति । भिमौलीचट्टीं परित्यक्तः शकटमार्गोऽत्र पुन रप्युपलोक्यते । उपरिष्टात् रमणीया दृढा गृहा पञ्च आपणा राजकीयसेनानिवेशस्थानं चात्र सन्ति ।

राणीबागचट्टीतः प्रस्थितानां काठगोदाम एव दृष्टिपथमुपयाति । राणीबाग् चट्टीतः ३। अर्धक्रोश दूरे वर्तते ऽयमिति १०४ समेऽर्धक्रोशे वर्ततेयमिति पर्यवस्यति ।

काठगोदामनगरमत्यल्पपरिमाणमेव । रानीबाग् चट्टिस्थानगच्छतो प्रथमतो राजकीयवनप्रसम्पादन शाला दृष्टिपथमुपयाति । तत्र विच्छिविरच्छा गुहा । नगरेऽत्र शारदेशिका एव विशेषतो वसन्ति । अन्ये च मुसलमानिनः केचित् ।

पूर्वमत्र राजकीयकाष्ठसंमहालयोऽवर्तत । अद्यापि च वर्तत इव । हिमालयात्समानीतानि सर्वाणि काष्ठान्यत्रैवैकत्र सम्मेल्य स्थाप्यन्ते । अत एव चास्य नगरस्य ' काठगोदाम ' इति नाम प्रवर्तते । नाम्नो ऽस्य संस्कृतभाषायां ' काष्ठसंमहालय ' इत्यनुवादः कर्तुं शक्यते ।

पत्रप्रस्थापनशाला ( Post Office ) समीप एव वाष्पशकटावस्थितिस्थान ( Railway Station ) मप्यस्ति । इदञ्च कस्यचिच्छाखावाष्पशकटमार्गस्या वसानस्थानम् । वाष्पशकटाश्चात्यल्पपरिमाणा अपि शकटानुबन्धो वाष्पयन्त्र ( Engine ) द्वयेनाकृष्यते । पर्वतपादमूलदेशत्वेन भूभागस्य निम्नोन्नततया नाल मेकं वाष्पयन्त्रमिति द्वयं संयोज्यते शकटानुबन्धेना इत्थं शकटानुबन्धगतागतस्य परिश्रमसाध्यतामालो च्यैव जनानां गतागतव्ययोऽप्यधिको न्ययम्यत । काठगोदामाद्धल्द्वानीनगरं क्रोशद्वयमात्रदूरवर्त्यपि प्रापणभृतिरष्टौ कला गृह्यन्ते ।

काठगोदामनगरे दुर्लभं शुद्धं जलम् । सुदूरे प्रवहन्त्या नद्या एव पवित्रं जलमानेयं भवति । यन्त्रधाराजलन्तु सुलभमेव । स्थानञ्च विविक्त मत्र न लभ्यते । आपणक्रीतान्नभोजिनो विनान्येषा मन्नाहाराद्युपयोगोऽशक्यकरणं एव । अत एव चात्र विशेषतो जना न विलम्बन्ते । वयमपि चानेनैव कारणेन तत्राविश्रम्यैव हल्द्वानीमगच्छाम ।

काठगोदामनगराद्धल्द्वानीनगरं यावत्समीचीनो विस्तृतश्शकटमार्गोऽस्ति निर्मितः । रामगङ्गानद्याः पानीयं कुल्यामुखेनानीतं मध्येमार्गमवान्तराल्प कुल्यासु प्रवहत्पथिकानां घर्मपीडितानां तर्पयति चक्षूंषि ।

काठगोदामान् १०॥ घण्टाकाले प्रस्थिता वयं ११॥ घण्टाकाले हल्द्वानीनगरमभजाम । हल्द्वानीनगरं चेदं काठगोदामस्य दक्षिणदिशायां ४ अर्धक्रोशदूरे वर्तते । बदरिकाश्रमात्प्रतिनिवर्तमानास्सर्व एव जनाः काठगोदामेऽविलम्बमानास्तत्र याष्पशकटं आरोढुन्तथात्र घोटकशकटमार्गेणायान्तोऽपि सर्वदा ऽत्र जनसम्मर्दोऽधिक एव ।

नगरेऽत्र सन्ति बहवो धनिनां दृढा गृहाः खण्ड द्वयात्मकाः । एका धर्मशाला देवालयश्चैकोऽत्र स्तः । अन्यदेशीयास्सर्वं एव जनाः धर्मशालायामेवावास मारचयन्ति । धर्मशालाया एको भागो जीर्णशीर्ण इति समीचीने स्वल्पे स्थान एवाहमहमिकयावतरन्ति सर्वं इति महत्कष्टमनुभवन्ति ।

नगरमध्ये च महती कुल्या स्वच्छस्वादुपानीया रामगङ्गायाः प्रवहति। तेन जलसौख्यम्महदेव जनानाम्। सर्वे च पदार्था अत्रापणेषु लभ्यन्ते ।

हरिद्वारक्षेत्राद्बदरिकाश्रमं गत्वा ततो हरद्वारं प्रतिनिवर्तमानानां मध्येमार्गमधोलिखितानि प्रधाना नि स्थानानि दृष्टिपदमुपयान्ति

गमनसमये—

| | |
|---|---|
| १६२ | ज्योतिर्मठः, |
| १६३॥ | विष्णुप्रयागः, |
| १८१ | बदरिकाश्रमः, |

प्रतिनिवृत्तिसमये—

| बदरिकाश्रमात् अर्धक्रोशाः । | स्थाननामानि । |
|---|---|
| १७॥ | विष्णुप्रयागः, |
| १९ | ज्योतिर्मठः, |
| ५६ | नन्दप्रयागः, |
| ६३ | कर्णप्रयागः, |
| ७४॥। | आदिबदरी चट्टी, |
| ९२ | मेहल्चौरी |
| १०० | गनायी, |
| ११०॥ | द्वाराहाट्, |
| १४३ | खेरना, |
| १५९॥। | भीमताल्, |
| १६४॥। | राणीबाग्, |
| १६७ | काठगोदामः, |

हरिद्वारात् बदरिकाश्रमं केवल गत्वा प्रतिनिवर्तमानानां मार्गः ३४८ अर्धक्रोशात्मको भवति ।

काठगोदामनगरवृत्तान्तवर्णनप्रकरणे किञ्चिल्लेख-नीयं विस्मृतम्। तदिदानीं विलिख्यानन्तरमग्रे चाल-यामि लेखिनीम्।

काठगोदामनगरादुच्छकटमार्गः कश्चन याति राणी खेत्-सेनानिवेशपर्यन्तम्। तत्र च तुरगशकटा धावन्ति। प्रतिदिनं कन्दसे काले राणीखेत् सेनानिवेशं प्राप्नोति शकटः।

तत्र काठगोदामात् नयिनीताळपर्यन्तं 'रोहिल खण्डकुमायून् बाष्पशकटपथजनताप्रबन्धेन धावन्ति शकटाः, नयिनीताळनगराद्राणीखेतपर्यन्तं स्मित्-रोड्विल् नाम्न्या जनतायाः (Messrs Smith Rodwell and Co) प्रबन्धेन धावन्ति।

अक्टोबरमासस्य प्रथमदिवसादारभ्य जून्मासस्य पञ्चदशदिवसं यावद्यौ शकटाश्रयप्राप्तिसमयौ ततो ऽन्यावेव तौ जून्मासस्य षोडशदिवसादारभ्य सेप्टम्बर

सत्रेयं व्यवस्था—

| स्थाननामानि । | अक्टोबरमास १ दिवसाज्जून्मास १५ दिवसंयावत् | | | |
|---|---|---|---|---|
| | प्रस्थानसमयः | | प्राप्तिसमयः | |
| | प्रथमशकटः | द्वितीयः | प्रथमशकटः | द्वितीयः |
| काठगोदामः | ७–० | ११–१० | .... | .... |
| नयनीताळः | ९–४५ | १३–५५ | ९–३० | १३–३० |
| खेरना | १५– ५ | १९–१५ | १५– ० | १९–१० |
| राणीखेत् | .... | .... | १७– ० | २१–१० |
| राणीखेत् | ६– ५ | ९– ० | .... | ... |
| खेरना | ८– ५ | ११– ० | ८– ० | १०–५५ |
| नयनीताळः | १२–५० | १५–४५ | १३– ५ | १६– ० |
| काठगोदामः | .... | .... | १५– ५ | १८– ० |

| स्थाननामानि । | जून्मास १६दिवसात् सेप्टम्बरमास १०दिवसंयावत् | | | |
|---|---|---|---|---|
| | प्रस्थानसमयः | | प्राप्तिसमयः | |
| | प्रथमशकटः | द्वितीयः | प्रथमशकटः | द्वितीयः |
| काठगोदामः | ७— ० | ११—१० | .... | .... |
| नयिनीताळः | ९—४५ | १३—५५ | ९—३० | १३—४० |
| खेरना | १६— ५ | २०—१५ | १६— ० | २०—१० |
| राणीखेत् | .... | .... | १८ . ० | २२-१० |
| राणीखेत् | ५— ५ | ८— ० | .... | .... |
| खेरना | ७— ५ | १०— ० | ७—० | ९—५५ |
| नयिनीताळः | १२—५० | १५-४५ | १३—५ | १६— ० |
| काठगोदामः | .... | .... | १५—५ | १८— ० |

एतावता च बदरिकाश्रमगमनागमनवृत्तान्तानलिखम्। सम्प्रत्यत्र बदरिकाश्रमयात्रारम्भस्थानभूतं हरिद्वारं प्रति चेन्नपुरवासिभिः बोम्बायनगरवासिभिः कल्कत्तानगरवासिभिश्च येन येन मार्गेण गन्तव्यं तान् मार्गान् प्रापणभृत्यादिकञ्च विलिख्य समापयामि बदरिकाश्रमयात्रावृत्तान्तम्।

मद्रपुरा ( Madras ) हरिद्वारपर्यन्तमार्गा नानाविधास्सन्ति, तेष्वयं सुगमस्समीचीनश्च—

१. मद्रपुरम् ( Madras )
२. आर्कोणम् ( Arkonam )
३. रायचूर ( Raichur )
४. बोम्बाय् ( Bombay )
५. कल्याणि (Kalyan)
६. मण्माड् ( Mumnad)
७. खण्ड्वा ( Khandwa )
८. इटार्सी ( Itarsi )
९. भोपाल् (Bhopal )
१०. बिना (Bina)
११. झाँसी ( Jhansi )
१२. ग्वालियर ( Gwalior )
१३. आगरा ( Agra Fort)

१४. टुण्डला ( Tundla )
१५. अलीगढ् ( Aligarh )
१६. चन्दौसी ( Chandausi )
१७. मुरादाबाद् ( Moradabad )
१८. लक्सर ( Laksar )
१९. हरिद्वारम् ( Hardwar )

मार्गोऽयं १९८४ अर्धक्रोशदैर्घ्यैः ।

| | |
|---|---|
| चेन्नपुराद्धोम्बायनगरं यावत् | ७९४ |
| बोम्बायनगरात् हरिद्वारं यावत् | ११९० |
| आहत्य | १९८४ |

चेन्नपुराद्धरिद्वारंयावत्प्रापणभृतिः

| | |
|---|---|
| प्रथमव्यूहस्य रूप्याणि | १२४–२–६ |
| द्वितीयव्यूहस्य | ६२–६–० |
| तृतीयव्यूहस्य | २९–६–६ |

चेन्नपुरे बाष्पशकटमार्गेण 'रायचूर' 'बोम्बाय्' 'अलीगढ' 'मोरादाबाद्' इत्येतेषु स्थानेषु शकटान्तु बन्धान्तरारोहणं कार्यं भवति ।

अपरोऽपि कश्चन मार्गोऽधोलिखितरीत्या ज्ञेयः—

१. मद्रपुरम् ( Madras )
२. आर्कोणम् ( Arkonam )

३. रायचूर ( Raichur )
४. बोम्बाय् ( Bombay )
५. अहमदाबाद् ( Ahmedabad )
६. अजमेर ( Ajmere )
७. फुलेरा ( Phulera )
८. बान्दीकुयी ( Bandikui )
९. रेवाडी ( Rewari )
१०. देहली ( Delhi )
११. सहरन्पुर ( Sdaharanpur )
१२. लक्सर ( Laksar )
१३. हरिद्वारम् ( Hardwar )

मार्गोऽयं १८४५ अर्धक्रोशात्मकः ।

| | |
|---|---|
| मद्रपुराद्बोम्बायुनगरं यावत् | ७१४ |
| बोम्बायनगरादेहळीं यावत् | ८९० |
| देहळीतः सहरन्पुरं यावत् | ११२ |
| सहरन्पुरात् लक्सरं यावत् | ३३ |
| लक्सरस्थानात् हरिद्वारं यावत् | १६ |
| आहत्य— | १८४५ |

| | |
|---|---|
| प्रापणभृतिश्च प्रथमश्रेण्याः— | ११५- ५-० |
| द्वितीयश्रेण्याः— | ५७-१२-६ |
| तृतीयश्रेण्याः— | २४- २-३ |

पूर्वोक्तमार्गेष्वन्यतमस्य मार्गस्य ग्रहणेऽपि, मद्रा
सेनगरेऽपि च ममदम्याभिजनस्य गमनागमनयोः
ऐभिरुक्तात्पूर्वोक्तो मार्गो बहुभिरवलम्ब्यते ।

इतोऽपि कश्चन मार्गोऽस्ति । तस्मिंश्च बोम्बाय्
नगरं मार्गमध्ये नायाति । स चाधस्तान्निर्दिष्टरीत्या ज्ञेयः-

१. मद्रपुरम् ( Madras )
२. आर्कोनम् ( Arkonam )
३. रायचूर ( Raichur )
४. दोण्ड् ( Dhond )
५. मन्माड् [ Mumnad ]
६. खण्ड्वा [ Khandwa ]
७. इटार्सी ( Itarsi )
८. भोपाल् [ Bhopal ]
९. बिना ( Bina )
१०. झाँसी ( Jhansi )
११. ग्वालियर ( Gwalior )
१२. आगरा ( Agra Fort )
१३. टुण्डला ( Tundla )
१४. अलीगढ् ( Aligarh )
१५. गाजियाबाद् ( Ghaziabad )
१६. मीरट्( Meerut )

१७. सहरन्पुर ( Shaharanpur )

१८. लक्सर ( Laksar )

१९. हरिद्वारम् ( Hardwar )

अयञ्च मार्गः १७२९ अर्धक्रोशात्मकः ।

| | |
|---|---|
| मद्रपुराद्रायचूरं यावत् | ३५१ |
| रायचूरस्थानात् ढोण्डस्थानं यावत् | २७६ |
| द्रोण्डस्थानान्मन्माडं यावत् | १४६ |
| मण्माड्स्थानात् इटार्सी यावत् | २०२ |
| इटार्सीतः टुण्डलां यावत् | ३९१ |
| टुण्डलातः गाजियाबादं यावत् | ११५ |
| गाजियाबादात् सहरन्पुरं यावत् | ९९ |
| सहरन्पुरात् लक्सरं यावत् | ३३ |
| लक्सराद्धरिद्वारं यावत् | १६ |
| आहत्य— | १७२९ |

प्रयाणभृतिश्च मद्रपुराद्धरिद्वारपर्यन्तम्,

| | |
|---|---|
| प्रथमवर्गस्य — | १०९— ०—० |
| द्वितीयवर्गस्य | ५४— ८—६ |
| तृतीयवर्गस्य | २१—१०—९ |

विवरणम् ।

| स्थानात् | स्थानस्य | प्रापणभृतिः । प्रथमव्यूहस्य | द्वितीयस्य | तृतीयस्य |
|---|---|---|---|---|
| मद्रपुरम् | रायचूर | २२- ०-० | ११- ०-० | ४- ९-० |
| रायचूर | ढोण्ड् | १७- ०-० | ८- ०-० | ५- ५-० |
| ढोण्ड् | मण्माड् | ९- २-० | ४- ९-० | १- ८-० |
| मण्माड् | इटार्सी | १९- २-० | ९- ९-० | ४-११-० |
| इटार्सी | टुण्डला | २४-१५-४ | १२- ७-६ | ६- १-६ |
| टुण्डला | गाजियाबाद् | ७- ३-० | ३-१०-० | ०-१३-९ |
| गाजियाबाद् | सहरन्पुरम् | ६- १-० | ३- १-६ | १- ५-६ |
| सहरन्पुरम् | लक्सर | २- १-० | १-१०-६ | ०- ४-० |
| लक्सर | हरिद्वारम् | १- ०-० | ०- ९-० | ०- ४-० |
| आहत्य— | | १०९- ०-० | ५४- ८-६ | २३-१०-९ |

मद्रपुराद्धरिद्वारस्य प्रदर्शितेन मार्गेण बौम्बायि नगराद्धरिद्वारस्य मार्गः प्रदर्शितप्राय इति न पुनरयं लिख्यते । कल्कत्तानगरात्तु तमत्र लिखामः तच्चैवम्—

१. कल्कत्ता (Calcutta)
२. खाना ( Khana )
३. असन्सोल् ( Asansol)
४. लक्खीसराया (Luckeesarai)
५. बांकीपुर (Bankipor)
६. मोगल्सराया (Mogalsarai)
७. काशी (Benares)
८. लक्ष्मणपुरम् (Lucknow)
९. बरेली (Barelly)
१० मुरादाबाद् (Moradabad)
११. लक्सर (Lhaksar)
१२. हरिद्वारम् (Hardwar)

अयञ्च ९७१ अर्धक्रोशात्मकः ।

| | |
|---|---|
| कल्कत्तानगरात् मोगलसरायीं यावत् | ४६९ |
| मोगलसरायीतः लक्सरं यावत् | ४८६ |
| लक्सरात् हरिद्वारं यावत् | १६ |
| आहत्य— | ९७१ |

भापणमृतिश्च प्रथमस्याः ७०- २-०

द्वितीयस्याः ३५- १-६

तृतीयस्याः १०-११-९

विवरणम् ।

| स्थानानि | प्रथमस्याः | द्वितीयस्याः | तृतीयस्याः |
|---|---|---|---|
| कल्कत्तानगरात् मोगलसराय्याः | ३८ ११ ० | १९ ५ ६ | ५ १० ० |
| मोगल्सरायीतः लक्सरस्य | ३० ६ ० | १५ ३ ० | ४ १३ ६ |
| लक्सरात् हरिद्वारस्य | १ १ ० | ० ९ ० | ० ४ ३ |
| आहत्य— | ७० २ ०, | ३५ १ ६, | १० ११ ९ |

| न | नाम- | रु | आ |
|---|---|---|---|
| | ब्रह्मविद्याविजय , सद्विद्याविजयः, अद्वैतविद्याविजयः, परिकरविजय ] | (यन्त्रस्थः) | |
| १६. | यतिलिङ्गसमर्थनम् | ० | ४ |
| १७. | प्रपन्नपारिजात. | ० | ४ |
| १८. | न्यायभास्कर (जगन्मिथ्यात्वखण्डनम्) | १ | ८ |
| १९. | भेदवाद तत्क्रतुन्यायविचारश्च , | ० | ४ |
| २०. | दृश्यत्वानुमाननिरासवाद.मोक्षकारणतावादश्च | ० | ४ |
| २१. | कार्याधिकरणवाद भा १ | ० | १० |
| २२ | कार्याधिकरणवाद भा २ , | १ | ० |
| २३. | कार्याधिकरणतत्वम् | ० | १४ |
| २४ | श्रीरामानुजसिद्धान्तसार. | १ | ० |
| २५. | श्रुतितात्पर्यनिर्णय | (यन्त्रस्थ) | |
| | **मीमांसा ग्रन्थाः ।** | | |
| २६ | भाट्टरहस्यम् | १ | ८ |
| २७. | मीमांसापादुका | ० | ७ |
| २८. | मीमांसाकौस्तुभ भा १ | १ | ४ |
| २९. | मीमांसाकौस्तुभ भा ४ | १ | ६ |
| ३०. | मीमांसाकौस्तुभ भा ५ | १ | ६ |
| ३१. | सेश्वरमीमांसा | १ | १४ |
| | **न्याय ग्रन्था ।** | | |
| ३२. | प्रामाण्यवाद | २ | ४ |

काञ्च्यां—श्रीसुदर्शनमुद्रायन्त्रालये

# क्रय्याणि पुस्तकानि.

## वैदिक ग्रन्थाः।

| न. | नाम | रु | आ |
|---|---|---|---|
| १. | श्रीसूक्तभाष्यम् | ० | ९ |
| २. | पुरुषसूक्तभाष्यम् | १ | ० |
| ३. | तैत्तिरीयोपनिषद्भाष्यम् | ३ | ० |
| ४. | सन्ध्यावन्दनभाष्यम् | ० | ८ |
| | **वेदान्त ग्रन्थाः।** | | |
| ५. | शतदूषणी भा—१ | ४ | ६ |
| ६. | शतदूषणी भा २ | ३ | १२ |
| ७. | शतदूषणी भा- ३ | ३ | १२ |
| ८. | शतदूषणी भा-४ | ३ | १२ |
| ९. | भगवद्गीता प्रतिपदार्थविवरणसहिता | ५ | ९ |
| १०. | भगवद्गीता-वरवरमुनिव्याख्यासहिता | २ | ४ |
| ११ | गीतार्थसग्रह रक्षयासहित | ० | ६ |
| १२ | तत्त्वनिर्णय (शैववैष्णववाद) | ० | ४ |
| १३ | सिद्धान्तचिन्तामणि | ० | ४ |

| न | नाम | रु | आ |
|---|---|---|---|
| ५३. | ईश्वरसंहिता | ७ | ८ |
| ५४. | परमेश्वरसंहिता सव्याख्या | १० | ० |

## सम्प्रदाय ग्रन्था ।

| न | नाम | रु | आ |
|---|---|---|---|
| ५५. | तत्त्वत्रयम् | ० | ४ |
| ५६. | मुमुक्षुप्पडिरहस्यम् | ० | ४ |
| ५७. | श्रीवचनभूषणम् | ० | ८ |
| ५८. | श्रीवादिभीकरवैभवम् [सचित्र] | ० | ६ |
| ५९. | श्रीवादिभीकरवैभवम् [चित्ररहितम्] | ० | ४ |
| ௬0. | ஸ்ரீ ப்ரதிவாதி பயங்கரம் அண்ணாவைபவம் | 0 | 8 |
| ౬౧. | అణ్ణావైభవమ్ | ० | [illegible] |
| 62 | அருளிச்செயல்ரஹஸ்யம் | 0 | 4 |
| ౬3. | ముక్తభోగావళి | ० | [illegible] |
| ౬౪. | సచ్చరిత్ర పరిత్రాణమ్ | ० | [illegible] |
| 65 | [illegible] | 1 | 8 |
| 66 | விசிஷ்டாத்வைத ஸித்தாந்த ஸாரம் | 0 | 2 |
| 67 | [illegible] | அச்சில | |
| 68 | [illegible] | „ | |
| 69 | வேதம் | 0 | 2 |
| 70 | மோக்ஷம் | 0 | 2 |

## आख्यायिका ।

| न | नाम | रु | आ |
|---|---|---|---|
| ७१. | संसारचक्रम् भा १ | १ | ० |
| ७२. | संसारचक्रम् भा २ | ० | १२ |

| नं | नाम | रु | आ |
|---|---|---|---|
| | इतर ग्रन्थाः । | | |
| ८४. | वाल्मीकिभावदीपः | १ | ० |
| ८५. | विष्णुसहस्रनामस्तोत्रं | ० | २ |
| ८६. | लक्ष्मीसहस्रनामस्तोत्रम् | ० | २ |
| ८७. | सुभाषितकौस्तुभः | ० | ४ |
| ८८. | सप्तभङ्गीतरङ्गिणी [जैनग्रन्थः] | ० | १० |
| ८९. | सर्वदर्शनशिरोमणिः | ० | ३ |
| ९०. | भस्मधारणविचारः | ० | २ |
| ९१. | परतत्वनिर्णय | ० | २ |
| 92. | [illegible] | 0 | 4 |
| 93 | *Journal of P. B. Mutt* | *Free* | |
| 94 | *History* ,, ,, ,, ,, | ,, | |
| 95. | [illegible] | 0 | 4 |
| ९६. | दुर्वादविधूननम् | ० | ८ |
| [illegible] | [illegible] | [illegible] | [illegible] |
| 98. | [illegible] | 0 | 4 |
| ९९. | वडबानलः | ० | ८ |
| १०० | अन्तर्व्याप्तिबहिर्व्याप्तिविचारः | ० | २ |
| १०१. | ऐकशास्त्र्यमीमांसा | ० | ८ |
| [illegible] | [illegible] | [illegible] | [illegible] |
| १०३. | सुदर्शनमीमांसा | ० | १० |
| 104. | [illegible] | 2 | 8 |

| नं नाम | रु | आ |
|---|---|---|
| १०५ श्रीवैष्णवमतदूषणोद्धार | १ | ० |
| ౧౦౬. పరమపదిక సిద్ధాన్త రత్నాకరము | ౨ | ० |
| १०७. भोजनकुतूहलम् | [यन्त्रस्थः] | |
| १०८. श्रीभाष्यविमर्शनपरीक्षा | ० | ६ |

## हिन्दी भाषा की पुस्तकें ।

| | | |
|---|---|---|
| १०९. यतिराजवैभव | ० | ६ |
| ११०. उपनयनगायत्रीमीमासापरीक्षा | ० | ६ |
| १११. चक्रधारणप्रमाणसंग्रह | ० | ४ |
| ११२. श्रीरामानुजसम्प्रदाय की प्राचीनता | ० | १ |
| ११३. विशिष्टाद्वैतसिद्धान्तसारसंग्रह | ० | १ |
| ११४. चक्रधारण क्यों करना चाहिये | ० | १ |
| ११५. सन्ध्यावन्दनविधि | ० | २ |
| ११६. व्रतोत्सवनिर्णय | ० | २ |
| ११७. तत्वोद्बोधन | ० | ४ |
| ११८. मिथ्या आक्षेपों का निरास | ० | २ |
| ११९. तिरुप्पल्लाण्डु | ० | ४ |
| १२०. ऊर्ध्वपुण्ड्रधारणविधि | ० | १ |
| १२१. श्रीपराशरविशिष्टपरमधर्मशास्त्र | ० | १२ |
| १२२ वेदान्तरहस्य | ० | ४ |
| १२३. श्रीशाण्डिल्यविशिष्टपरमधर्मशास्त्र | ० | १२ |
| १२४. तप्तमुद्राधारण पर निर्णयसिन्धुकारका फैसला | ० | ४ |

| नं | नाम | रु | आ |
|---|---|---|---|
| १२५. | दिव्यदेश विवेचन | ० | १ |
| १२६. | द्वन्द्वयुद्धसमीक्षा | ० | १२ |
| १२७. | वैदिकसर्वस्वकाविशेषाङ्क | १ | ८ |
| १२८. | अद्वैतविवेचन | १ | ४ |
| १२९. | सत्यार्थप्रकाश और श्रीवैष्णवसम्प्रदाय | ० | ६ |
| १३०. | श्रीभगवदाराधनविधि | ० | २ |
| १३१. | तुलसीमाहात्म्यदीपिका | ० | ४ |
| १३२. | पुरुषसूक्त (सटीक) | | |
| १३३. | श्रीसूक्त ,, | | |
| १३४. | ईशावास्योपनिषत् (सटीक) | | |

मञ्जुभाषिणी संस्कृतभाषामयी साप्ताहिकी पत्रिका, वार्षिकमूल्यम् ३ ०

प्राप्तिस्थानम्—

श्रीसुदर्शनमुद्रायन्त्रालय,

Conjeeveram (*Madras*)